[४]पगन्तव्यम्, लेशतोप्यावरणसद्भावे तस्याशेषार्थगोचरत्वासम्भवात्, [५]यत्रैवावरणसद्भावस्तत्रैवास्यप्रतिबन्धसम्भवात् ।

आगमद्वारेणाशेषार्थ गोचरं ज्ञानम्; इत्यप्यसुन्दरम्; विशद-ज्ञानस्य [६]प्रस्तुतत्वात् । न चागमज्ञानं विशदम् । नचागमोप्यशेषार्थ-गोचरः; अर्थपर्यायेषु तस्याप्रवृत्तेः । [७]ते चार्थस्य प्रतिक्षणम् 'अर्थ क्रिया कारित्वात्सत्त्वाद्वा सन्ति' इत्यवसीयन्ते । अन्यथास्याऽवस्तुत्व [८]प्रसङ्गः । करणजन्यत्वे चाशेषज्ञानस्यातीन्द्रियार्थेषु प्रतिबन्धः प्रसिद्ध एव, इन्द्रि-याणां रूपादिमत्यव्यवहितेऽनेकावयव प्रचयात्मकेऽर्थे प्रवृत्ति प्रतीतेः ।

ननु योगजधर्मानु गृहीतानामिन्द्रियाणां गगनाद्यशेषातीन्द्रियार्थ साक्षात्कारिज्ञानजनकत्वसम्भवात् कथं तत्राशेषज्ञानस्येन्द्रियजत्वेपि प्रतिबन्धसम्भवः; इत्यप्यसमीक्षिताभिधानम्; योगजधर्मानुग्रहस्येन्द्रि-याणां प्रथमपरिच्छेदे प्रतिविहितत्वात् ।

[९]भावना प्रकर्षपर्यन्तजत्वाद्योगिविज्ञानस्य नोक्त दोषानुषङ्गः । भावना हि द्विविधा—श्रुतमयी, चिन्तामयी च । तत्र श्रुतमयी [१०]श्रूयमाणेभ्यः [११]परार्थानुमानवाक्येभ्यः समुत्पद्यमानज्ञानेन श्रुतशब्द-वाच्यतामास्कन्दता [१२]निर्वृत्तापरम प्रकर्षं प्रतिपद्यमाना स्वार्थानुमानज्ञान-लक्षणया चिन्तया निर्वृत्तां चिन्तामयीं [१३]भावनामारभते । साच प्रकृष्य-माणा परं प्रकर्षपर्यन्तं सम्प्राप्ता योगिप्रत्यक्षं जनयतीति तत्कथमस्या-वरणापाय प्रभवत्वम्? इत्यप्यसारम्; क्षणिकनैरात्म्यादिभावनायाश्चिन्ता-मय्याः श्रुतमय्याश्च मिथ्यारूपत्वात् । न च मिथ्याज्ञानस्य परमार्थविषय योगिज्ञानजनकत्वमतिप्रसङ्गात् । यथा च न क्षणिकत्वं नैरात्म्यं शून्यत्वं वा वस्तुनस्तथा वक्ष्यते ।

किञ्च, अखिलप्राणिनां भावनावतां तथाविधज्ञानोत्पत्तिः किन्न

स्यात् सुगतवत् ? तेषां तथाभूतभावनाऽभावाच्चेत्; न प्रतिपन्नतत्त्वान भावानाप्रवृत्तमनसां सर्वेषां समाना भावनैव कुतो न स्यात् ? प्रतिबन्धक कर्मसद्भावाच्चेत्; तर्हि भावना प्रतिबन्धककर्मापाये भावनावत् योगिज्ञान प्रतिबन्धककर्मापाये तज्ज्ञानोत्पत्तिरभ्युपगन्तव्या। इति सिद्धं साकल्ये नावरणापाये एवातीन्द्रियमशेषार्थविषयंविशदंप्रत्यक्षम्।

ननु चाशेषार्थज्ञातुस्त (ज्ञानस्यत) ज्ज्ञानवतः कस्यचित्पुरुषविशेषस्यैवासम्भवात्कथं तज्ज्ञानसम्भवः ? तथाहि—न कश्चित्पुरुषविशेषः सर्वज्ञोस्ति सदुपलम्भकप्रमाणपञ्चकागोचर चरित्वाद्वन्ध्यास्तनन्धयवत्। न चायमसिद्धो हेतुः; तथाहि—सकलपदार्थवेदी पुरुषविशेषः प्रत्यक्षेण प्रतीयते, अनुमानादिप्रमाणेन वा ? न तावत्प्रत्यक्षेण; प्रतिनियतासन्नरूपादि विषयत्वेन अन्यसन्तानस्थसंवेदनमात्रेप्यस्य सामर्थ्यं नास्ति, किमङ्ग पुनरनाद्यनन्तातीतानागतवर्त्तमान सूक्ष्मादिस्वभावसकलपदार्थ साक्षात्कारिसंवेदनविशेषे तदध्यासिते पुरुषविशेषे वा तत्स्यात् ? न चातीतादिस्वभावनिखिलपदार्थग्रहणमन्तरेण प्रत्यक्षेण तत्साक्षात्करणप्रवृत्तज्ञानग्रहणम्, ग्राह्याग्रहणे तन्निष्ठग्राहकत्वस्याप्यग्रहणात्।

नाप्यनुमानेनासौ प्रतीयते; तद्धिनिश्चितस्वसाध्य प्रतिबन्धाद्धेतोरुदयमासादयत्प्रमाणतां प्रतिपद्यते। प्रतिबन्धश्चाखिल पदार्थज्ञसत्त्वेन स्वसाध्येन हेतोः किं प्रत्यक्षेण गृह्येत, अनुमानेन वा ? न तावत्प्रत्यक्षेण; अस्याऽत्यक्षज्ञानवत्सत्त्वसाक्षात्करणाक्षमत्वेन तत्प्रतिपत्तिनिमित्तहेतुप्रतिबन्धग्रहणेप्यक्षमत्वात्। न ह्यप्रतिपन्नसम्बन्धिनस्तद्गतसम्बन्धावगमो युक्तोऽतिप्रसङ्गात्। नाप्यनुमानेन; अनवस्थेतरेतराश्रयदोषानुषङ्गात्। न चात्र धर्मीप्रत्यक्षेणप्रतिपन्नः, अनक्षज्ञानवत्यत्यक्षेऽध्यक्षस्याप्रवृत्तेः। प्रवृत्तौवाध्यक्षेणैवास्य प्रतिपन्नत्वान्न किञ्चिदनुमानेन। नाप्यनुमानेन; हेतोः पक्षधर्मतावगममन्तरेणानुमानस्यैवाप्रवृत्तेः।

न चाप्रतिपन्ने धर्मिणि[५] हेतोस्तत्सम्बन्धावगमः । नाप्यप्रतिपन्नपक्षधर्मत्वो हेतुः प्रतिनियतसाध्यप्रतिपत्त्यङ्गम्

किञ्च, सत्तासाधने[६] सर्वो हेतुरसिद्धविरुद्धानैकान्तिकत्वलक्षणां त्रयीं[७] दोषजातिं नातिवर्त्तते । तथाहि—सर्वज्ञसत्त्वे साध्ये भावधर्मो[८] हेतुः, अभावधर्मो वा स्यात्, उतउभयधर्मो वा ? प्रथमपक्षेऽसिद्धः; भावेऽसिद्धे तद्धर्मस्य सिद्धि विरोधात् । द्वितीयपक्षे तु विरुद्धः भावे[९]साध्ये-ऽभावधर्मस्याभावाव्यभिचारित्वेन विरुद्धत्वात् । उभयधर्मोप्यनैकान्तिकः सत्तासाधने[१०]; तदुभयव्यभिचारित्वात्[११] ।

अपि चाविशेषेण सर्वज्ञः कश्चित्साध्यते[१२], विशेषेण वा ? तत्राद्य-पक्षे विशेषतोऽर्हत्प्रणीतागमाश्रयणमनुपपन्नम् । द्वितीयपक्षे तु हेतोरपर-सर्वज्ञस्याभावेन[१३] दृष्टान्तानुवृत्त्यसम्भवादसाधारणानैकान्तिकत्वम्[१४] ।

किञ्च, यतोहेतोः प्रतिनियतोऽर्हन् सर्वज्ञः साध्यते ततो बुद्धो-पिसाध्यतां विशेषाभावात्[१५], न चात्र[१६] सर्वज्ञत्वसाधने हेतुरस्ति ।

यदप्युच्यते—सूक्ष्मान्तरितदूरार्थाः कस्यचित्प्रत्यक्षाः प्रमेयत्वात्पा-वकादिवत्; तदप्युक्तिमात्रम्[१७]; यतोऽत्रैकज्ञानप्रत्यक्षत्वं सूक्ष्माद्यर्थानां साध्यत्वेनाभिप्रेतम्, प्रतिनियतविषयानेकज्ञानप्रत्यक्षत्वं वा ? तत्राद्य-कल्पनायां विरुद्धो हेतुः; प्रतिनियतरूपादिविषयग्राहकानेकप्रत्ययप्रत्यक्ष-त्वेन व्याप्तस्याग्न्यादिदृष्टान्त धर्मिणि प्रमेयत्वस्योपलम्भात् साध्यविक-लता च दृष्टान्तस्य । द्वितीय कल्पनायां सिद्धसाध्यता अनेक प्रत्यक्षैरनु-मानादिभिश्च तत्परिज्ञानाभ्युपगमात्[१८] ।

"यदि षड्भि प्रमाणैः स्यात्सर्वज्ञः केन वार्यते ।
एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ॥
नूनं स चक्षुषा सर्वान् रसादीन्प्रतिपद्यते ।"

[ मीमांसक श्लोक चोदना सूत्र० श्लोक—१११, ११२ ] इत्यभिधानात् ।

किञ्च, प्रमेयत्वं किमशेषज्ञेयव्यापि प्रमाणप्रमेयत्वव्यक्ति लक्षणमभ्युपगम्यते,[१] अस्मदादिप्रमाणप्रमेयत्व व्यक्तिस्वरूपं वा स्यात्, उभयव्यक्ति साधारण सामान्य स्वभावं वा? प्रथम पक्षोऽयुक्तः; विवादाध्यासित पदार्थेषु[३] तथाभूत प्रमाणप्रमेयत्वस्यासिद्धत्वात्, अन्यथा[४] साध्यस्यापि सिद्धेर्हेतूपादानमपार्थकम्[५] सन्दिग्धान्वयश्चायं[६] हेतुः स्यात्; तथाभूतप्रमाणप्रमेयत्वस्य दृष्टान्तेऽसिद्धत्वात्[७]। द्वितीयपक्षेऽसिद्धो हेतुः;[८] अस्मदादिप्रमाणप्रमेयत्वस्य विवादगोचरार्थेष्वसम्भवात्[९]। सम्भवे वा ततस्तथाभूतप्रत्यक्षत्वसिद्धेरेवस्यात्[१०]। तत्र चाविवादान्न हेतूपन्यासः फलवान्। नाप्युभयप्रमेयत्वव्यक्तिसाधारणं प्रमेयत्वसामान्यं हेतुः; अत्यन्तविलक्षणातीन्द्रियेन्द्रिय[११] विषयप्रमाणप्रमेयत्वव्यक्ति द्वयसाधारणसामान्यस्यैवासम्भवात्। तन्नानुमानात्तत्सिद्धिः।

नाप्यागमात्;[१३] सोपि हि नित्यः, अनित्यो वा तत्प्रतिपादकः स्यात्? न तावन्नित्यः, तत्प्रतिपादकस्य तस्याभावात्, भावेपि प्रामाण्यासम्भवात् कार्येऽर्थे[१४] तत्प्रामाण्य प्रसिद्धेः। अनित्योऽपि किं तत्प्रणीतः,[१५] पुरुषान्तरप्रणीतो वा? प्रथमपक्षेऽन्योन्याश्रयः—सर्वज्ञप्रणीतत्वे तस्य प्रामाण्यम्, ततस्तत्प्रतिपादकत्वमिति। नापि पुरुषान्तरप्रणीतः तस्योन्मत्तवाक्यवदप्रामाण्यात्। तन्नागमादप्यस्य सिद्धिः।

नाप्युपमानात्;[१६] तत्खलूपमानोपमेययोरनवयवेनाध्यक्षत्वे सतिसादृश्यावलम्बनमुदयमासादयति; नान्यथातिप्रसङ्गात्[१७]। न चोपमानभूतः कश्चित्सर्वज्ञत्वेनाध्यक्षतः सिद्धो येन[१८] तत्सादृश्यादन्यस्य[१९] सर्वज्ञत्वमुपमानात्साध्येत।

नाप्यर्थापत्तितस्तत्सिद्धिः सर्वज्ञसद्भावमन्तरेणानुपपद्यमानस्य प्रमाणषट्क विज्ञातार्थस्य कस्यचिदभावात्। धर्माद्युपदेशस्य वहुजनपरिगृहीतस्यान्यथापि[१] भावात्। तथा चोक्तम्—

"सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।
[ मीमांसक श्लोक चोदना सूत्र० श्लोक ११७ ]

दृष्टो न चैकदेशोऽस्ति लिङ्गं वा योनुमापयेत् ॥१॥

न चागमविधिः कश्चिन्नित्यः सर्वज्ञ बोधकः ।

न च मन्त्रार्थ वादानां तात्पर्यमवकल्पते ॥२॥

न चान्यार्थं प्रधानैस्तै स्तदस्तित्वं विधीयते ।

न चानुवदितुं शक्यः पूर्वमन्यैरबोधितः ॥३॥

अनादेरागमस्यार्थो न च सर्वज्ञ आदिमान् ।

कृत्रिमेण त्वसत्येन स कथं प्रतिपाद्यते ॥४॥

अथ तद्वचनेनैव सर्वज्ञोऽन्यैः प्रतीयते ।

प्रकल्पेत कथं सिद्धिरन्योन्याश्रययोस्तयोः ? ॥५॥

सर्वज्ञोक्ततया वाक्यं सत्यं तेन तदस्तिता ।

कथं तदुभयं सिध्येत् सिद्धमूलान्तराहृते ॥६॥

असर्वज्ञप्रणीतात्तु वचनान्मूलवर्जितात् ।

सर्वज्ञमवगच्छन्तः स्ववाक्यात्किन्न जानते ? ॥७॥

सर्वज्ञसदृशं कञ्चिद्यदि पश्येम सम्प्रति ।

उपमानेन सर्वज्ञं जानीयाम ततो वयम् ॥८॥

उपदेशो हि बुद्धादेर्धर्माऽधर्मादिगोचरः ।

अन्यथा नोपपद्येत सार्वज्ञं यदि नाऽभवत् ॥९॥

बुद्धादयो ह्यवेदज्ञास्तेषां वेदादसम्भवः ।

उपदेशः कृतोऽतस्तैर्व्यामोहादेव केवलात् ॥१०॥

ये तु मन्वादयः सिद्धाः प्राधान्येन त्रयीविदाम् ।

त्रयी विदाश्रित ग्रन्थास्ते वेदप्रभवोक्तयः ॥११॥ इति ।

न च प्रमाणान्तरं सदुपलम्भकं सर्वज्ञस्य साधकमस्ति।
मा भूदत्रत्येदानीन्तनास्मदादिजनाना(नां)सर्वज्ञस्य साधकं॥

प्रत्यक्षाद्यन्यतमं देशान्तर कालान्तर वर्तिनां केषाञ्चिद्भविष्यतीति चाऽयुक्तम्;

"यज्जातीयैः प्रमाणैस्तु [५] यज्जातीयार्थदर्शनम्।
दृष्टं सम्प्रति लोकस्य [६] तथा कालान्तरेप्यभूत्॥"

[ मीमांसक श्लोक चोदना सूत्र० श्लोक ११३

इत्यभिधानात्। तथा हि–विवादाध्यासिते देशेकाले च प्रत्यक्षादिप्रमाणम्, अत्रत्येदानीन्तन प्रत्यक्षादिग्राह्यसजातीयार्थ ग्राहकं तद्विजातीयसर्वज्ञाद्यर्थग्राहकं वा न भवति प्रत्यक्षादिप्रमाणत्वात् अत्रत्येदानीन्तनप्रत्यक्षादिप्रमाणवत्।

ननु[७] च यथा भूतमिन्द्रियादिजनितं प्रत्यक्षादि सर्वज्ञाद्यर्थासाधकं दृष्टं तथा भूतमेव देशान्तरे कालान्तरे च तथा साध्यते, अन्यथाभूतं[८] वा? तथाभूतं चेत्सिद्धसाधनम्। अन्यथाभूतं चेदप्रयोजको हेतुः[९]; जगतो बुद्धिमत्कारणत्वे साध्ये [१०]सन्निवेशविशिष्टत्वादिवत्; तदसाम्प्रतम्; तथाभूतस्यैव तथा साधनात् न च सिद्ध [११]साधनमन्यादृशप्रत्यक्षाद्यभावात्। तथा हि–[१२]विवादापन्नं प्रत्यक्षादिप्रमाणत्वात्[१३]प्रसिद्धप्रत्यक्षादिप्रमाणवत्। न गृध्द्रवराहपिपीलिकादिप्रत्यक्षेण सन्निहितदेशविशेषानपेक्षिणा नक्तञ्चरप्रत्यक्षेण वालोकानपेक्षिणानेकान्तः, [१४]कात्यायनाद्यनुमानातिशयेन, जैमिन्याद्यागमातिशयेन[१५] वा; तस्यापीन्द्रियादिप्रणिधान[१६]सामग्री विशेषमन्तरेणासम्भवात्, अतीन्द्रियानुमेयाद्यर्थाविषयत्वेन [१७]स्वार्थातिलङ्घनाभावात्। तथाचोक्तं–

"यत्राप्यतिशयो[1] दृष्टः सस्वार्थानतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ[2] स्यान्नरूपे श्रोत्रवृत्तितः(ता) ॥१॥
[ मीमांसक श्लोक चोदना सूत्र० श्लोक ११४ ]

येपि[3] सातिशया दृष्टाः प्रज्ञा[4]मेधा[5]दिभिर्नराः ।
स्तोक स्तोकान्तरत्वेन नत्वतीन्द्रिय दर्शनात् ॥२॥
प्राज्ञोपि[6] हि नरः सूक्ष्मानर्थान्दृष्टुं क्षमोपिसन् ।
सजातीरनतिक्रामन्नतिशेते परान्नरान् ॥३॥
[7]एकशास्त्रविचारेषु दृश्यतेऽतिशयो महान् ।
न तु शास्त्रान्तरज्ञानं तन्मात्रेणैव लभ्यते ॥४॥
ज्ञात्वा[8] व्याकरणं दूरं[9] बुद्धिः शद्वापशद्वयो ।
प्रकृष्यते[10] न नक्षत्र ग्रहण निर्णये ॥५॥
ज्योतिर्वि[11]च्च[12] प्रकृष्टोपि चन्द्रार्कग्रहणादिषु ।
न भवत्यादिशब्दानां साधुत्वं ज्ञातुमर्हति ॥६॥
तथा वेदेतिहासादिज्ञानातिशयवानपि ।
न स्वर्ग[13]देवताऽपूर्वप्रत्यक्षीकरणेक्षमः ॥७॥
[14]दशहस्तान्तरंव्योम्नियोनामोत्प्लुत्यगच्छति ।
न योजनमसौ गन्तुं शक्तोऽभ्यासशतैरपि" ॥८॥ इति ।

प्रसङ्गविपर्ययाभ्यां[15] चास्या[16]शेषार्थ विषयत्वं बाध्यते; तथाहि— सर्वज्ञस्य ज्ञानं प्रत्यक्षं[17] यद्यभ्युपगम्यते तदा तद्धर्मादि[18]ग्राहकं न स्याद्वि-द्यमानोपलम्भनत्वात् विद्यमानोपलम्भनं तत् सत्सम्प्रयोगजत्वात् । सत्सम्प्रयोगजं तत्, प्रत्यक्ष[19]शब्दवाच्यत्वादस्मदादिप्रत्यक्षवत् । तद्धर्मादि-ग्राहकं चेत् न विद्यमानोपलम्भनं धर्मादेरविद्यमानत्वात् । तत्त्वे[20] चास-त्सम्प्रयोगजत्वे चाऽप्रत्यक्ष[21]शब्दा[22]वाच्यत्वम् ।

धर्मज्ञत्वनिषेधे चान्याशेषार्थप्रत्यक्षत्वेपि न [1]प्रेरणाप्रामाण्य प्रतिबन्धो धर्मेतस्या एवप्रामाण्यात् । तदुक्तम्-

"सर्वप्रमातृसम्बन्धिप्रत्यक्षादि निवारणात् ।
केवलागमगम्यत्वं लप्स्यते पुण्यपापयोः ॥१॥
धर्मज्ञत्वनिषेधस्तु [2]केवलोत्रोपयुज्यते ।
[3]सर्वमन्यद्विजानंस्तु पुरुषः [4]केन वार्यते ॥२॥"

[5]किञ्च, अस्य ज्ञानं चक्षुरादिजनितं धर्मादिग्राहकम्, अभ्यास जनितं वा स्यात्, शब्दप्रभवं वा, अनुमानाविर्भूतं वा ? प्रथमपक्षे धर्मादिग्राहकत्वायोगश्चक्षुरादीनां प्रतिनियतरूपादिविषयत्वेन तत्प्रभवज्ञानज्ञानस्याप्यत्रैव प्रवृत्तेः । अथाभ्यासजनितं, ज्ञानाभ्यासादि प्रकर्षतरतमादिक्रमेण तत्प्रकर्ष सम्भवे सकलस्वभावा[6]तिशयपर्यन्तं संवेदनमवाप्यते; इत्यपि मनोरथमात्रम्; अभ्यासो हि कस्यचित्प्रतिनियतशिल्पकलादौ तदुपदेशाद् ज्ञानाच्च दृष्टः । न चाशेषार्थोपदेशो ज्ञानं वा सम्भवति । तत्सम्भवे किमभ्यासप्रयासेनाशेषार्थज्ञानस्य सिद्धत्वात् । अन्योन्याश्रयश्च-अभ्यासात्तज्ज्ञानम्, ततोऽभ्यास इति । [7]शब्दप्रभवं [8]तदित्यप्ययुक्तम्; परस्पराश्रयणानुषङ्गात्-सर्वज्ञप्रणीतत्वेन हि तत्प्रामाण्येऽशेषार्थ विषय ज्ञानसम्भवः, तत्सम्भवे चाशेषज्ञस्य [9]तथा भूतशब्दप्रणेतृत्वमिति । अभ्युपगम्यते च प्रेरणाप्रभव ज्ञान[10]वतो धर्मज्ञत्वम्,

"चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं [11]व्यवहितं [12]विप्रकृष्टमित्येवंजातीयकमर्थमवगमयितुमलंनान्यत् किञ्चनेन्द्रियादिकम्"
[ शावर भारत० १।१।२ ] इत्यभिधानात् ।

अनुमानाविर्भूतमित्यप्यसङ्गतम्; धर्मादेरतीन्द्रियत्वेन तज्ज्ञापक लिङ्गस्य तेन सह सम्बन्धासिद्धेरसिद्धसम्बन्धस्य चाज्ञापकत्वात् ।

किञ्च, अनुमानेनाशेषज्ञत्वेऽस्मदादीनामपि तत्प्रसङ्गः 'भावाभावोभयरूपं जगत्प्रमेयत्वात्' इत्याद्यनुमानस्यास्मदादीनामपि भावात् ।

अनुमानागमज्ञानस्यचाष्पस्टत्वात्तज्जनितस्याप्यवैशद्य सम्भवान्न तज्ज्ञानवान्सर्वज्ञोयुक्तः[१२] ।

न च वक्तव्यम्–'पुनः पुनर्भाव्यमान भावनाप्रकर्षपर्यन्ते योगिज्ञानरूपतामासादयेत्तद्वैशद्यभाग्[१] भविष्यति । दृश्यते चाभ्यासबलात्कामशोकाद्युपप्लुतज्ञानस्यवैशद्यम्' इति; तद्वदस्याप्युपप्लुतत्वप्रसङ्गात्[३] ।

किञ्च, अस्याखिलार्थग्रहणम् सकलज्ञत्वम्, प्रधानभूतकतिपयार्थ ग्रहणं वा ? तत्राद्यपक्षे क्रमेण तद्ग्रहणम्, युगपद्वा ? न तावत्क्रमेण; अतीतानागतवर्तमानार्थानां परिसमाप्त्यभावात्तज्ज्ञानस्याप्य परिसमाप्तेः सर्वज्ञत्वायोगात् । नापियुगपत् ; परस्परविरुद्धशीतोष्णाद्यर्थानामेकत्रज्ञाने प्रतिभासासम्भवात् । सम्भवे वा प्रतिनियतार्थस्वरूपप्रतितीविरोधः ।

किञ्च, एकक्षण एवाशेषार्थग्रहणात्, द्वितीयक्षणेऽकिञ्चिज्ज्ञः स्यात् । तथा परस्थरागादिसाक्षात्करणाद्रागादिमान्, अन्यथा सकलार्थसाक्षात्करणविरोधः ।

नापि प्रधानभूत कतिपयार्थग्रहणम्; इतरार्थव्यवच्छेदेन 'एतेषामेव प्रयोजननिष्पादकत्वात्प्राधान्यम्'[४] इति निश्चयो हि सकलार्थज्ञाने सत्येव घटते । नान्यथा, तच्च प्रागेव कृतोत्तरम् ।

कथं चातीतानागतग्रहणं तत्स्वरूपासम्भवाद् ? असतो ग्रहणे तैमिरिकज्ञानवत्प्रामाण्याभावः । सत्त्वेन ग्रहणेऽतीतादेर्वर्त्तमानत्वम् । तथा चान्यकालस्यान्यकालतया वस्तुनो ग्रहणात्तज्ज्ञानस्याज्प्रामाण्यम् ।

कथं चासौ[५] तग्राह्याखिलार्थाज्ञाने[६] तत्कालेप्य सर्वज्ञैर्ज्ञातुं शक्यते ? तदुक्तम्–

"सर्वज्ञोयमिति ह्येतत्तत्कालेपि बुभुत्सुभिः ।
तज्ज्ञानज्ञेयविज्ञानरहितै र्गम्यते कथम् ॥१॥

कल्पनीयाश्च[7] सर्वज्ञा भवेयुर्बहवस्तव ।
य एव स्यादसर्वज्ञः स सर्वज्ञं[8] न बुध्यते ॥२॥
सर्वज्ञो नावबुद्धश्च येनैव स्यान्न तं प्रति ।
तद्वाक्यानां प्रमाणत्वं मूलाज्ञाने[9]ऽन्यवाक्यवत्[10] ॥३॥

[ मीमांसक श्लोक चोदना सूत्र० श्लोक—१३४-३६ ] इति ।

अत्र[1] प्रतिविधीयते । यत्तावदुक्तम्—सदुपलम्भक प्रमाणपञ्चकाविषयत्वं साधनम् तदसिद्धम्; तत्सद्भावावेदकस्यानुमानादेः सद्भावात् । तथाहि—कश्चिदात्मा सकलपदार्थसाक्षात्कारी तद्ग्रहणस्वभावत्वे सति[2] प्रक्षीणप्रतिबन्धप्रत्ययत्वात्, यद्यद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययं तत्तत्साक्षात्कारि यथापगततिमिरादिप्रतिबन्धं लोचनविज्ञानं रूपसाक्षात्कारि, तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धप्रत्ययश्च कश्चिदात्मेति । न तावत्सकलार्थ ग्रहणस्वभावत्वमात्मनोऽसिद्धम्; चोदनाबलान्निखिलार्थज्ञानोत्पत्त्यन्यथानुपपत्तेस्तस्य तत्सिद्धेः, 'सकलमनेकान्तात्मकं सत्त्वात्' इत्यादिव्याप्तिज्ञानोत्पत्तेर्वा । यद्धि[4] यद्विषयं तत्तद्ग्रहणस्वभावम् यथा रूपादिपरिहारेण रसविषयं रासनविज्ञानं रसग्रहणस्वभावम्, सकलार्थविषयश्चात्मा व्याप्त्यागमज्ञानाभ्यामिति । सोयं[5] "चोदना हि भूतं भवन्तं भविष्यन्तं विप्रकृष्टमित्येवंजातीयकमर्थमवगमयितुमलं पुरुषान्" (शावर भा० १-१-२) इति स्वयं ब्रुवाणो विधिप्रतिषेधविचारणानिबन्धनं साकल्ये नव्याप्तिज्ञानं च प्रतिपद्यमानः सकलार्थग्रहणस्वभावतामात्मनो निराकरोतीति कथं स्वस्थः[6] ? प्रक्षीणप्रतिबन्धप्रत्ययत्वं च प्रागेवप्रसाधितत्वान्नासिद्धम्[7] ।

साध्यसाधनयोश्च प्रतिबन्धो न प्रत्यक्षानुमानाभ्यांप्रतिज्ञायते येनोक्तदोषानुषङ्गः[8] स्यात्, तर्काख्यप्रमाणान्तरात्तत्सिद्धेः[9] ।

यच्चाप्रतिपन्नपक्षधर्मत्वो हेतु र्न प्रतिनियतसाध्यप्रतिपत्त्यङ्ग[10]मित्युक्तम्; तदप्यपेशलम्; नहि [11]सर्वज्ञोऽत्र धर्मित्वेनोपात्तो [12]येनास्यासिद्धे-रयंदोषः। किं तर्हि ? कश्चिदात्मा तत्र चाविप्रतिपत्तेः। न चापक्ष-धर्मस्य हेतोरगमकत्वम्;

"पित्रोश्च ब्राह्मणत्वेन पुत्रब्राह्मणतानुमा।
सर्वलोक प्रसिद्धा न पक्षधर्ममपेक्षते॥"

इति स्वयमभिधानात्।

यदप्युक्तम्—सत्तासाधने सर्वो हेतुस्त्रयीं दोषजातिं नाति वर्त्तत इति; तत्सर्वानुमानोच्छेद कारित्वाद युक्तम्; शक्यं हि वक्तुं धूमत्वादि यंद्यग्निमत्पर्वतधर्मस्तदाऽसिद्धः; [1]कोहि नामाग्निमत्पर्वतधर्मं हेतुमिच्छन्न-ग्निमत्वमेव [2]नेच्छेत्। तद्विपरीत [3]धर्मश्चेद्विरुद्धः; साध्यविरुद्धसाधनात्। उभयधर्मश्चेद्व्यभिचारी सपक्षेतरयोर्वर्त्तनात्। विमत्यधिकरणभावापन्न-धर्मिधर्मत्वे धूमवत्वादेः सर्वंसुस्थम्। यथा [4]चाचलस्याचलत्वादिना प्रसिद्धसत्ताकस्य सन्दिग्धाग्निमत्त्वादिसाध्यधर्मस्य धर्मो हेतु र्नविरुध्यते, तथा [5]प्रसिद्धात्मत्वादिविशेषणसत्ताकस्याप्रसिद्धसर्वज्ञत्वोपाधिसत्ताकस्य च धर्मिणो धर्मः प्रकृतो हेतुः कथं विरुध्येत ?

यदपि अविशेषेणसर्वज्ञः कश्चित्साध्यते विशेषेण वेत्याद्यऽभिहि-तम्; तदप्यभिधानमात्रम्; सामान्यतस्तत्साधनात्तत्रै[6]वविवादात्। विशेषविप्रतिपत्तौ पुनर्दृष्टेष्टाविरुद्धवाक्त्वादर्हत एवाशेषार्थज्ञत्वं सेत्स्यति। कथं वा तत्प्रतिषेधः अत्राप्यस्य दोषस्यसमानत्वात् ? अर्हतो हि तत्प्रति-षेधसाधनेऽप्रसिद्धविशेषणः पक्षो व्याप्तिश्च[8] न सिद्धेत्,[9] दृष्टान्तस्य[10] साध्य-[11]शून्यतानुषङ्गात्। [12]अनर्हतश्चेत्; स एवदोषोबुद्धादेः [13]परस्यासिद्धेः; अनिष्टानुषङ्गश्चार्हतस्तदप्रतिषेधात्[14]। सामान्यतस्तत्प्रतिषेधे सर्वं [15]सुस्थम्।

यच्चोक्तम्—एकज्ञानप्रत्यक्षत्वं सूक्ष्माद्यर्थानां साध्यत्वेनाभिप्रेतं प्रतिनियतविषयानेकज्ञानप्रत्यक्षत्वं वेत्यादि; तदप्युक्तिमात्रम्; प्रत्यक्षसामान्येन कस्यचित्सूक्ष्माद्यर्थानां प्रत्यक्षत्वसाधनात्। प्रसिद्धे च तेषां सामान्यतः कस्यचित्प्रत्यक्षत्वे तत्प्रत्यक्षस्यैकत्वमिन्द्रियानिन्द्रियानपेक्षत्वात्सिद्धेत्, तदपेक्षस्यैवास्यानेकत्वप्रसिद्धेः[३६]। तदनपेक्षत्वं च प्रमाणान्तरात्सिद्धेत्; तथाहि—योगिप्रत्यक्षमिन्द्रियानिन्द्रियानपेक्षं सूक्ष्माद्यर्थविषयत्वात्, यत्पुनरिन्द्रियानिन्द्रियापेक्षं तन्न सूक्ष्माद्यर्थविषयम् यथास्मदादिप्रत्यक्षम्, तथा च योगिनः प्रत्यक्षम्, तस्मात्तथेति।

किञ्च, एवंसाध्यविकल्पेनानुमानोच्छेदः। शक्यते हि वक्तुम्—साध्यधर्मिधर्मोऽग्निः साध्यत्वेनाभिप्रेतः, दृष्टान्तधर्मिधर्मः, उभयधर्मो वा? प्रथमपक्षे विरुद्धो हेतुः, तद्विरुद्धेन दृष्टान्तधर्मिणि तद्धर्मेणाग्निना धूमस्य व्याप्ति प्रतीतेः। साध्यविकलश्च दृष्टान्तः[१] स्यात्। द्वितीयपक्षे तु प्रत्यक्षादि[२] विरोधः। अथोभयगताग्निसामान्यं साध्यते तर्हि सिद्धसाध्यता[३]।

यच्चान्यदुक्तम्—प्रमेयत्वं किमशेषज्ञेयव्यापिप्रमाणप्रमेयत्वव्यक्तिलक्षणमस्मदादिप्रमाणप्रमेयत्वव्यक्तिस्वरूपं वेत्यादि; तद्धूमादिसकलसाधनोन्मूलनहेतुत्वान्न वक्तव्यम्। तथाहि—साध्यधर्मिधर्मो धूमो हेतुत्वेनोपात्तः, दृष्टान्तधर्मिधर्मो वा स्यात्, उभयगतसामान्यरूपो वा? साध्यधर्मिधर्मत्वे[४] दृष्टान्ते[५] तस्याभावादनन्वयो[६] हेतुदोषः। दृष्टान्तधर्मि[७]धर्मत्वे साध्यधर्मिण्यभावादसिद्धता। उभयगतसामान्यरूपत्वेप्यसिद्धतैव, प्रत्यक्षत्वाप्रत्यक्षत्वेनात्यन्तविलक्षणमहानसाचलप्रदेशव्यक्ति द्वयाश्रितसामान्यस्यैवासम्भवात् अथकण्ठाक्षिविक्षेपादि लक्षणधर्मकलाप साधर्म्यान्नमहानसाचलप्रदेशाश्रित धूमव्यक्त्योरत्यन्तवैलक्षण्यं येनोभयगतसामान्यासिद्धेरसिद्धता स्यात्; तर्हिस्वापूर्वार्थव्यवसायात्मकत्वादि धर्मकलापसाधर्म्यस्यातीन्द्रियेन्द्रियविषयप्रमाणव्यक्तिद्वये[८]ऽत्यन्तवैलक्षण्यनिवर्त्तकस्य[९] सम्भ-

वादुभयसाधारण सामान्यसिद्धेः कथंप्रमेयत्वसामान्यस्यासिद्धिः ?

यच्चेदमुक्तम्–प्रसङ्ग विपर्ययाभ्यां [१०] चास्याशेषार्थ विषयत्वं बाध्यत इत्यादि; तन्मनोरथमात्रम्; साध्यसाधनयोर्व्याप्य व्यापकभाव-सिद्धौ हि व्याप्याभ्युपगमो व्यापकाभ्युपगमनान्तरीयको [११] यत्र प्रदर्श्यते तत्प्रसङ्ग साधनम्। व्यापकनिवृत्तौ चावश्यं भाविनी व्याप्यनिवृत्तिः स विपर्ययः। न च [१२] प्रत्यक्षत्व[१३]सत्सम्प्रयोगजत्व[१४]विद्यमानोपलम्भनत्व[१५]धर्माद्यनिमित्तत्वानां व्याप्यव्यापकभावः [१६] क्वचित् प्रतिपन्नः। स्वात्मन्ये-वासौ प्रतिपन्न इत्यप्यसङ्गतम्, चक्षुरादिकरणग्रामप्रभवप्रत्यक्षस्या-व्यवहितदेशकाल[१७]स्वभावा[१८]विप्रकृष्ट प्रतिनियतरूपादिविषयत्वा[१९]भ्युपगमात्, नियमस्य[२०] चाभावाद्विप्रकृष्टार्थ [१] ग्राहकेपि प्रत्यक्षशब्दवाच्यत्वदर्शनात्। तथाहि–अनेक योजन शतव्यवहितार्थग्राहि वैनतेयप्रत्यक्षम् रामायणादौ प्रसिद्धम्। लोके चातिदूरार्थग्राहि [२] गृध्रवराहादिप्रत्यक्षम्, स्मरणसव्य-[३]पेक्षेन्द्रियादिजन्यप्रत्यभिज्ञाप्रत्यक्षं च कालविप्रकृष्टस्यातीतकाल सम्बन्धित्वस्यातीतदर्शनसम्बन्धित्वस्य च [४] ग्राहि [५] पुरोवस्थितार्थे [६] भवतै-वाभ्युपगम्यते। अन्यथा–

"देशकालादिभेदेन [७] [८] तत्रास्त्यवसरो [९] मितेः।
इदानीन्तनमस्तित्वं नहि पूर्वधिया [१०] गतम्॥"

[ मीमांसक श्लोक प्रत्यक्ष सूत्र० श्लोक २३३-३४ ]

इत्यादिना [११] तस्यागृहीतार्थाधिगन्तृत्वं पूर्वापरकालसम्बन्धित्व-लक्षणनित्यत्वग्राहकत्वं च [१२] प्रतिपाद्यमानं विरुध्येत। प्रातिभं च ज्ञानं शब्दलिङ्गाक्षव्यापारानपेक्षं 'स्वो मे भ्राता आगन्ता' इत्याद्याकार-मनागतातीन्द्रियकालविशेषणार्थं प्रतिभासं जाग्रद्दशायां स्फुटतरमनुभूयते।

किञ्च, धर्मादेरतीन्द्रियत्वाच्चक्षुरादिनानुपलम्भः, अविद्यमा-

नत्वाद्वास्यात्, अविशेषणत्त्वाद्वा ? न तावदाद्यःपक्षः; अतीन्द्रियस्याप्यतीतकालादेरुपलम्भाभ्युपगमात्। नाप्यविद्यमानत्वात्; भावि धर्मादेर्[१३]-तीतकालादेरिवाविद्यमानत्वेप्युपलम्भसम्भवात्। अविशेषणत्वं तु तस्यासिद्धं सकललोकोपभोग्यार्थजनकत्वेन द्रव्यगुणकर्मजन्यत्वेन चास्याखिलार्थविशेषणत्वसम्भवात्[१४]। अतीताद्यतीन्द्रियकालादेरिवास्यापि विशेषण ग्रहणप्रवृत्तचक्षुरादिना ग्रहणोपपत्तेः कथं धर्मं[१५] प्रत्यस्यानिमित्तत्वसाधने[१६] प्रसङ्गविपर्ययसम्भवः[१७] ? प्रश्नादिमन्त्रादिना[१८] च संस्कृतं चक्षुर्यथा कालविप्रकृष्टार्थस्य द्रव्यविशेष संस्कृतं च निर्जीवकादि[१९] चक्षुर्जलाद्यन्तरितार्थस्य ग्राहकं दृष्टम्, तथा पुण्यविशेषसंस्कृतं[२०] सूक्ष्माद्यशेषार्थग्राहि भविष्यतीति न कश्चिदृष्टस्वभावातिक्रमः। 'स्वात्मनि च यावद्भिः कारणैर्जनितं यथा भूतार्थग्राहि प्रत्यक्षं प्रतिपन्नं तथा सर्वत्र सर्वदा प्राण्यन्तरेपि' इति नियमे नक्तंचराणामनालोकान्धकार व्यवहितरूपाद्युपलम्भो न स्यात्स्वात्मनि तथाऽनुपलम्भात्। प्राण्यन्तरे स्वात्मन्यनुपलब्धस्यानालोकान्धकारव्यवहितरूपाद्युपलम्भलक्षणातिशयस्य सम्भवे सूक्ष्माद्युपलम्भलक्षणातिशयोपि स्यात्। जात्यन्तरत्त्वं चोभयत्र[१] समानम्। अभ्युपगम्य चाक्षजत्वं सर्वज्ञ ज्ञानस्यातीन्द्रियार्थ साक्षात्कारित्वं समर्थितं नार्थतः[२], तज्ज्ञानस्य घातिकर्म चतुष्टयक्षयोद्भूतत्वात्।

यच्चास्य[३] ज्ञानं चक्षुरादिजनितं वेत्याद्यभिहितम्; तदप्यचारु; चक्षुरादिजन्यत्वेऽप्यनन्तरं धर्मादिग्राहकत्वाविरोधस्योक्तत्वात्। यच्चाभ्यासजनितत्वेऽभ्यासो हीत्याद्युक्तम्; तदप्ययुक्तम्; "उत्पादव्ययध्रौव्ययुक्तंसत्" (तत्त्वार्थ सूत्र० ५-३०) इत्यखिलार्थ विषयोपदेशस्याविसंवादिनो ज्ञानस्य च सामान्यतः सम्भवात्। न च तज्ज्ञानवत[४] एवाशेषज्ञत्वाद्वयर्थोभ्यासः; तस्यसामान्यतोऽस्पष्टरूपस्यैवाविर्भावात्, अभ्यासस्य[५] तत्प्रतिबन्धकापायसहायस्याशेषविशेषविषयस्पष्टज्ञानोत्पत्तौ व्या-

पारात्। नाप्यन्योन्याश्रयः; [६]अभ्यासादेवाखिलार्थ विषयस्पष्टज्ञानो-[७]त्पत्तेरनभ्युपगमात्।

शब्दप्रभव पक्षेप्यन्योन्याश्रयानुषङ्गोऽसङ्गतः; कारकपक्षे तद-सम्भवात्। पूर्वसर्वज्ञप्रणीतागमप्रभवं [८]ह्येतस्याशेषार्थज्ञानम्, तस्याप्यन्य सर्वज्ञागमप्रभवम्। न चैवमनवस्था दोषानुषङ्गः बीजाङ्कुरवदनादित्वे-नाभ्युपगमादागमसर्वज्ञ परम्परायाः।

यच्चानुमानाविर्भावितत्वपक्षे सम्बन्धासिद्धेरित्युक्तम्; तदसमीचीनम्; [९]प्रमाणान्तरात्सम्बन्धसिद्धेरभ्युपगमात्। न खलु कश्चित्तस्यागोचरोस्ति सर्वत्रेन्द्रियातीन्द्रियविषये [११]प्रवृत्तेरन्यथा तत्रा-नुमानाप्रवृत्ति प्रसङ्गात्, तस्य तन्निबन्धनत्वात्।

यच्चानुमानागमज्ञानस्य चास्पष्टत्वादित्यभिहितम्; तदप्य-समीक्षिताभिधानम्; नहि सर्वथा कारणसदृशमेवकार्यं विलक्षणस्या-प्यङ्कुरादेर्बीजादेरुत्पत्तिदर्शनात्। सर्वत्र हि सामग्रीभेदात्कार्यभेदः। [१२]अत्राप्यागमादिज्ञानेनाभ्यास प्रतिबन्धकापायादि[१३]सामग्रीसहायेनासादिता-शेषविशेषवैशद्यं विज्ञानमाविर्भाव्यते।

भावनाबलाद्वैशद्ये कामाद्युपप्लुतज्ञानवत्त[१४]स्याप्युपप्लुतत्व-प्रसङ्गः। इत्यप्यसाम्प्रतम्; यतो 'भावनाबलाद्ज्ञानं वैशद्यमनुभ-[१]वति' इत्येतावन्मात्रेण तज्ज्ञानस्य दृष्टान्तोपपत्तेः। न चाशेषदृष्टान्त धर्माणां [२]साध्यधर्मिण्यापादनं युक्तं सकलानुमानोच्छेदप्रसङ्गात्। न चाशेषज्ञज्ञानं क्रमेणाशेषार्थ[३]ग्राहिष्यते येन तत्पक्षनिक्षिप्तदोषोपनिपातः; सकलावरणपरिक्षये सहस्रकिरणवद्युगपन्निखिलार्थोद् द्योतनस्वभावत्वा-त्तस्य करणक्रमव्यवधानातिवर्तित्वाच्च।

यच्चोक्तम्—युगपत्परस्परविरुद्धशीतोष्णाद्यर्थानामेकत्र ज्ञाने

प्रतिभासासम्भवः; तदप्यसारम्; तत्र हि तेषामभावादप्रतिभासः, ज्ञानस्यासामर्थ्याद्वा ? न तावदभावात्, शीतोष्णाद्यर्थानां[४] सकृत्सम्भवात्। ज्ञानस्यासामर्थ्यादित्यसत्; परस्परविरुद्धानामन्धकारोद्योतादीनामेकत्र[५]ज्ञाने युगपत्प्रतिभाससंवेदनात्। सकृदेकत्रविरुद्धार्थानां प्रतिभासासम्भवे 'यत्कृतकं तदनित्यम्' इत्यादिव्याप्तिश्च न स्यात्, साध्यसाधन रूपतया तयोर्विरुद्धत्वसम्भवात्। नाप्येकत्रतेषां प्रतिभासे तज्ज्ञानस्य प्रतिनियतार्थ ग्राहकत्वविरोधः; अन्धकारोद्योतादिविरुद्धार्थ ग्राहिणोऽपि प्रतिनियतार्थ ग्राहकत्वप्रतीतेः।

यच्चान्यदुक्तम्—एकक्षण एवाशेषार्थग्रहणाद्द्वितीयक्षणेऽज्ञः स्यात्; तदप्यसम्बद्धम्; यदि हि द्वितीयक्षणेऽर्थानां तज्ज्ञानस्य चाभावस्तदा[७]ऽयंदोषः। न चैवम्, अनन्तत्वात्तद्द्वयस्य। पूर्वं हि भाविनोऽर्था भावित्वेनोत्पत्स्यमानतया प्रतिपन्ना न वर्त्तमानत्वेनोत्पन्नतया वा। साप्युत्पन्नता तेषां भवितव्यतया प्रतिपन्ना न भूततया। उत्तरकालं तु तद्विपरीतत्वेन ते[८] प्रतिपन्नाः। यदा हि यद्धर्मविशिष्टं वस्तु तदा तज्ज्ञाने[९] तथैव[१०] प्रतिभासते नान्यथा विभ्रमप्रसङ्गात् इति कथं गृहीतग्राहित्वेनाप्यस्या[११] प्रामाण्यम् ?

यच्चेदं परस्यरागादिसाक्षात्करणाद्रागादिमानित्युक्तम्; तदप्ययुक्तम्; [१२]तथापरिणामोहितत्त्वकारणं[१३] न संवेदनमात्रम्, अन्यथा 'मद्यादिकमेवंविधरसम्' इत्यादि वाक्यात्तच्छ्रोत्रियो यदा प्रतिपद्यते[१४] तदाऽस्यापि तद्रसास्वादनदोषः स्यात्। अरसनेन्द्रियजत्वात्तस्यादोशोयम्[१५]; [१६]इत्यन्यत्रापिसमानम्, नहि सर्वज्ञ ज्ञानमिन्द्रियप्रभवं प्रतिज्ञायते। किञ्चाङ्गनालिङ्गनसेवनाद्यभिलाषस्येन्द्रियोद्रेकहेतोराविर्भावोद्रागादिमत्त्वं[१] प्रसिद्धम्। न चासौ प्रक्षीणमोहे भगवत्यस्तीति कथं रागादिमत्त्वस्याशङ्कापि।

यदप्यभिहितम्—कथं चातीतादेर्ग्रहणं तत्स्वरूपासम्भवादित्यादि; तदप्यसारम्; [२]यतोऽतीतादेरतीतादिकालसम्बन्धित्वेनासत्त्वम्, तज्ज्ञानकालसम्बन्धित्वेन वा? नाद्यः पक्षो युक्तः; वर्त्तमानकालसम्बन्धित्वेन वर्त्तमानस्येव स्वकालसम्बन्धित्वेनातीतादेरपि सत्त्वसम्भवात्। वर्त्तमानकालसम्बन्धित्वेन [३]त्वतीतादेरसत्त्वमभिमतमेव, तत्कालसम्बन्धित्वतत्[४]सत्त्वयोः परस्परं भेदात्। न चैतत्कालसम्बन्धित्वेनासत्त्वे स्वकालसम्बन्धित्वेनाप्यतीतादेरसत्त्वम्; [५]वर्त्तमानकालसम्बन्धिनोप्यतीतादिकालसम्बन्धित्वेनासत्त्वात् तस्याप्यसत्त्वप्रसङ्गात् सकलशून्यतानुषङ्गः। न चातीतादेः सत्त्वेन ग्रहणे वर्त्तमानत्वानुषङ्गः; [६]स्वकालनियतसत्त्वरूपतयैव तस्य ग्रहणात्। ननु चातीतादेस्[७]तज्ज्ञानकाले असन्निधानात्कथं प्रतिभासः, सन्निधाने वा वर्तमानत्वप्रसङ्गः प्रसिद्धवर्त्तमानवत्; इत्यपि मन्त्रादिसंस्कृतलोचनादिज्ञानेन व्याप्तिज्ञानेन च प्रागेव कृतोत्तरम्।

अथोच्यते—'पूर्वं पश्चाद्वा यदि [९]क्वचित्कदाचिन्निखिलदर्शिनो विज्ञानं [१०]विश्रान्तं तर्हि तावन्मात्रत्वात्संसारस्य कुतोऽनाद्यनन्तता? अथ न विश्रान्तं तर्हि नानेकयुगसहस्रेणापि सकलसंसारसाक्षात्करणम्' इति; तदप्युक्तिमात्रम्; यतः किमिदं विश्रान्तत्वं नाम? किञ्चित्परिच्छेद्याऽपरस्यापरिच्छेदः [११]सकलविषयदेशकालगमना[१२]सामर्थ्यादवान्तरेऽवस्थानं वा, क्वचिद्विषये उत्पद्य विनाशो वा? न तावदाद्यविकल्पो युक्तः [१३]अनभ्युपगमात्। न खलु सर्वज्ञज्ञानं क्रमेणार्थपरिच्छेदकम्, युगपदशेषार्थोद्योतकत्वात्तस्येत्युक्तम्। द्वितीयविकल्पोप्य[१४]नभ्युपगमादेवायुक्तः। नहि विषयस्य देशं कालं वा गत्वा ज्ञानं तत्परिच्छेदकमिति केनाप्यभ्युपगतम्, अप्राप्यकारिणस्तस्य क्वचिद्गमनाभावात्। केवलं यथाऽनाद्यनन्तरूपतया स्थितोऽर्थस्तथैव तत्प्रतिपद्यते। तृतीयविकल्पोप्ययुक्तः;

क्वचिद्विषये तस्योत्पन्नस्यात्मस्वभावतया[15] विनाशासम्भवात्। नहि स्वभावो भावस्य[16] विनश्यति स्फटिकस्य स्वच्छतादिवत्, अन्यथा तस्याप्यभावः स्यात्। औपाधिकमेव हि रूपं नश्यति यथा तस्यैव रक्तिमादि[1]। कथं चैव[2] वादिनो वेदस्यानाद्यनन्तताप्रतिपत्तिस्तत्राप्युक्तविकल्पानामवतारात्[3]? कथं[4] वा साध्यसाधनयोः साकल्येन व्याप्तिप्रतिपत्तिः, सामान्येन[5] व्याप्तिप्रतिपत्तावप्यनाद्यनन्तसामान्यप्रतिपत्तावुक्तदोषानुषङ्ग[6] एव।

यच्चोक्तम्—'कथं चासौ[7] तत्कालेप्यऽसर्वज्ञैर्ज्ञातुं[8] शक्यते? तदपि फल्गुप्रायम्; विषयापरिज्ञाने[9] विषयिणोप्यपरिज्ञानाभ्युपगमे[10] कथं जैमिन्यादेः सकलवेदार्थपरिज्ञाननिश्चयोऽसकलवेदार्थविदाम्[11]? तदनिश्चये च कथं तद्व्याख्यातार्थाश्रयणादग्निहोत्रादावनुष्ठाने प्रवृत्तिः? कथं वा व्याकरणादिसकलशास्त्रार्थापरिज्ञाने तदर्थज्ञतानिश्चयो व्यवहारिणाम्? यतो व्यवहारप्रवृत्तिः स्यात्।

सुनिश्चितासम्भवद्बाधकप्रमाणत्वाच्चाशेषार्थवेदिनो[12] भगवतः सत्त्वसिद्धिः। न चेदमसिद्धम्; तथा हि—सर्वविदोऽभावः प्रत्यक्षेणाधिगम्यः, प्रमाणान्तरेण वा? न तावत्प्रत्यक्षेण; तद्धि सर्वत्र सर्वदा सर्वः सर्वज्ञो न भवतीत्येवं प्रवर्त्तते, क्वचित्कदाचित्कश्चिद्वा? प्रथमपक्षे न सर्वज्ञाभावस्तज्ज्ञानवत एवाशेषज्ञत्वात्। न हि सकलदेशकालाश्रितपुरुषपरिषत्साक्षात्करणमन्तरेण प्रत्यक्षतस्तदाधारमसर्वज्ञत्वं प्रत्येतुं शक्यम्। द्वितीयपक्षे तु न सर्वथा सर्वज्ञाभावसिद्धिः।

अथ न प्रवर्त्तमानं प्रत्यक्षं[13] सर्वज्ञाभावसाधकं किन्तु निवर्तमानम्। ननु कारणस्य[14] व्यापकस्य[15] वा निवृत्तौ[16] कार्यस्य[17] व्याप्यस्य वा निवृत्तिः प्रसिद्धा नान्यनिवृत्तावन्यनिवृत्तिरतिप्रसङ्गात्[18][19][20]। न चाशेषज्ञस्य

प्रत्यक्षं[21] कारणं व्यापकं वा येन तन्निवृत्तौ सर्वज्ञस्यापि निवृत्तिः। न चैवं[22] घटाद्यभावासिद्धिः एकज्ञानसंसर्गिपदार्थान्तरोपलम्भात्[1] क्वचित्तत्सिद्धेः[2]। न चात्राप्ययं[3] न्यायः[4] समानस्तत्संसर्गिण एव कस्यचिदभावात्[5], अन्यथा[6] सर्वत्र तदभावविरोधो घटादिवत्। तन्न प्रत्यक्षेणाधिगम्यस्तदभावः।

नाप्यनुमानेन, विवादाध्यासितः पुरुषः सर्वज्ञो न भवति वक्तृत्वाद्रथ्यापुरुषवदित्यनुमाने हि प्रमाणान्तरसंवादिनोऽर्थस्य वक्तृत्वं हेतुः तद्विपरीतस्य वा स्यात्, वक्तृत्वमात्रं वा ? प्रथमपक्षे विरुद्धो हेतुः, प्रमाणान्तरसंवादिसूक्ष्माद्यर्थवक्तृत्वस्याशेषज्ञे[7] एव भावात्। द्वितीयपक्षे तु सिद्धसाधनम्; तथाभूतस्य वक्तुरसर्वज्ञत्वेनास्माभिरभ्युपगमात्[8]। वक्तृत्वमात्रस्य तु हेतोः साध्यविपर्ययेण[9] सर्वज्ञत्वेनानुपलब्धेन सह सहानवस्थानपरस्परपरिहारस्थितिलक्षणविरोधासिद्धेस्ततो[10] व्यावृत्त्यभावान्न[11] स्वसाध्यनियतत्वं[12] यतोगमकत्वं स्यात्। सर्वज्ञे वक्तृत्वस्यानुपलब्धेस्ततो व्यावृत्तिरित्यप्यसम्यक्[13]; सर्वसम्बन्धिनोऽनुपलम्भस्यासिद्धेः, तेनैव[14] सर्वज्ञान्तरेण वा तत्र तस्योपलम्भसम्भवात्। सर्वज्ञस्य कस्यचिदभावात्सर्वसम्बन्धिनोऽनुपलम्भस्य सिद्धिरित्यसङ्गतम्, प्रमाणान्तरात्तत्सिद्धावस्य[15][16] वैयर्थ्यात्। अतः सिद्धौ[17] चक्रकानुषंगः; नापि स्वसम्बन्धिनोऽनुपलम्भात्तद्व्यतिरेकनिश्चयः[18][19], अस्य परचेतोवृत्तिविशेषैरनैकान्तिकत्वात्।

न चाखिलसाधनेषु दोषस्यास्य[20] समानत्वान्निखिलानुमानोच्छेदः, तत्र विपक्षव्यावृत्तिनिमित्तस्यानुपलम्भव्यतिरेकेण[21] प्रमाणान्तरस्य[22] भावात्। न[23] चात्र कार्यकारणभावः प्रसिद्धः; असर्वज्ञत्वधर्मानुविधानाभावाद्[24] वच-[25]

नस्य। यद्धि[२६] यत्कार्यं तत्तद्धर्मानुविधायि प्रसिद्धं वन्ह्यादिसामग्रीगतसु-[२७] रभिगन्धाद्यनुविधायिधूमवत्[२८]। तथाहि असर्वज्ञत्वं सर्वज्ञत्वादन्यत्पर्यु-दासवृत्त्या किञ्चिज्ज्ञत्वमभिधीयते। न च तत्तरतमभावाद्वचनस्य तथाभावो दृश्यते। तद्धिप्रकृष्टमत्यल्पज्ञानेषु कृम्यादिषु, न च तत्र वचन-प्रवृत्तेः प्रकर्षो दृश्यते। अथ[१] प्रसज्यप्रतिषेधवृत्त्या सर्वज्ञत्वाभावोऽसर्वज्ञत्वं[२] तत्कार्यं वचनम्; तर्हि ज्ञानरहिते मृतशरीरादौ तस्योपलम्भ-प्रसङ्गो ज्ञानातिशयवत्सु चाखिलशास्त्रव्याख्यातृषु वचनातिशयोप-लम्भो न स्यात्। न चैवम्, ततो ज्ञानप्रकर्षतरतमाद्यनुविधानदर्शना-त्तस्य तत्कार्यता[३] सातिशयतक्षादिकारणधर्मानुविधायिप्रासादादिकार्य-[४][५]विशेषवत्। तन्नानुमानात्तदभावसिद्धिः।

नाप्यागमात्, स हि तत्प्रणीतः, अन्यप्रणीतः, अपौरुषेयो वा तदभावसाधकः स्यात्? तत्र यद्यागमप्रणेता सकलं सकलज्ञविकलं साक्षात्प्रतिपद्यते युक्तोसौ तत्र[६] प्रमाणम्, किन्तु विद्यमानोपि न प्रकृता-[७]र्थोपयोगी, तथा प्रतिपद्यमानस्य तस्यैवाशेषज्ञत्वात्। न प्रतिपद्यते चेत्; तर्हि रथ्यापुरुषप्रणीतागमवन्नासौ तत्र[८] प्रमाणम्। न ह्यविदितार्थस्वरू-पस्य प्रणेतुः प्रमाणभूतागमप्रणयनं नामातिप्रसंगात्[९]। द्वितीयविकल्पे-प्येतदेव वक्तव्यम्।

अपौरुषेयोप्यागमो जैमिन्यादिभ्यो यदि सर्वत्र सर्वदा सर्वज्ञा-भावं प्रतिपादयेत्तर्हि सर्वस्मै प्रतिपादयेत् केनचित्[१०] सह प्रत्यासक्तिविप्रक-र्षविरहात् तथा च—

"विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतः पात्।" (श्वेताश्वत० ३।३) स वेत्ति विश्वं नहि तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्।" (श्वेताश्वत० ३।१०) "हिरण्यगर्भं" (ऋग्वेद अष्ट० ८ मं० १० सू० १२१) प्रकृत्य[११] "सर्वज्ञः" इत्यादौ न कस्यचिद्वि-

प्रतिपत्तिः स्यात्-'किमनेन[१२] सर्वज्ञः प्रतिपाद्यते[१३] कर्मविशेषो वा स्तुयते' इति। न खलु प्रदीपप्रकाशिते घटादौ कस्यचिद्विप्रतिपत्तिः-'किमयं घटः पटो वा' इति। न च स्वरूपेऽस्याप्रामाण्यम्[१]। अविसंवादो हि प्रमाणलक्षणं कार्ये स्वरूपे वार्थे[२] नान्यत्[३]। यत्र सोस्ति तत्प्रमाणम्। न चाशेषज्ञाभावावेदकं किञ्चिद्वेदवाक्यमस्ति, तत्सद्भावावेदकस्यैव श्रुतेः। तन्नागमादप्यस्याभावसिद्धिः।

नाप्युपमानात्; तत्खलूपमानोपमेययोरध्यक्षत्वे सति सादृश्यावलम्बनमुदयमासादयति नान्यथा। न चात्रत्येदानीन्तनोपमानभूताशेषपुरुषप्रत्यक्षत्वम् उपमेयभूताशेषान्यदेशपुरुषप्रत्यक्षत्वं चाभ्युपगम्यते; सर्वज्ञसिद्धिप्रसङ्गात्[४], निखिलार्थप्रत्यक्षत्वमन्तरेणाशेषपुरुषपरिषत्साक्षात्कारित्वासम्भवात्।

नाप्यर्थापत्तेस्तदभावावगमः; सर्वज्ञाभावमन्तरेणानुपजायमानस्य प्रमाणषट्कविज्ञातस्य कस्यचिदर्थस्यासम्भवात्। वेदप्रामाण्यस्य गुणवत्पुरुषप्रणीतत्वे सत्येव भावात्। अपौरुषेयत्वस्याग्रे विस्तरतो निषेधात्। न चार्थापत्तिरनुमानात्प्रमाणान्तरमित्यग्रे वक्ष्यते। तद्वदत्रापि व्याप्त्यादि[५]चिन्तायां[६] दोषान्तरं[७] चापादनीयम्।

नाप्यभावप्रमाणात्तदभावसिद्धिः, तस्यासिद्धेः, तदसिद्धिश्चाभावप्रमाणलक्षणस्य।

"प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते।
सात्मनोऽपरिणामो वा विज्ञानं वान्य वस्तुनि॥"
[ मीमांसक श्लोक अभावपत्त श्लोक ११ ]

इत्यादेः प्रागेव विस्तरतो निराकरणात्सिद्धा। इत्यलमतिप्रसङ्गेन[८]। न चानुमाने तत्सद्भावावेदके सत्येतत्प्रवर्त्तते-

"प्रमाणपञ्चकं[९] यत्र वस्तुरूपे न जायते।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता॥"
[ मीमांसक श्लोक अभावपत्त श्लोक १ ]

इत्यभिधानात्। किञ्च, अभावप्रमाणं–

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया॥"

[ मीमांसक श्लोक अभावपक्ष श्लोक २७ ]

इति सामग्रीतः प्रादुर्भवति। न चाशेषज्ञनास्तिताधिकरणाखिलदेशकालप्रत्यक्षता कस्यचिदस्त्यतीन्द्रियार्थदर्शित्वप्रसङ्गात्। नाप्यशेषज्ञः क्वचित्कदाचित्केनचित्प्रतिपन्नो येनासौ स्मृत्वानिषेध्येत, सर्वत्र सर्वदा तन्निषेधविरोधात्। न च निषेध्यनिषेध्याधारयोरप्रतिपत्तौ निषेधो नामातिप्रसङ्गात्। नह्यप्रतिपन्ने भूतले घटे च घटनिषेधो घटते। यथा चाभावप्रमाणस्योत्पत्तिः स्वरूपं विषयो वा न सम्भवति तथा प्राक्प्रपञ्चेनोक्तमिति कृतमतिप्रसङ्गेन।

तन्नाभावप्रमाणादप्यशेषज्ञाभावसिद्धिः। तदेवं सिद्धं सुनिश्चितासम्भवद्बाधकप्रमाणत्वमप्यशेषज्ञस्य प्रसाधकम् इत्यलमतिप्रसङ्गेन[१]।

ननु चावरणविश्लेषादशेषवेदिनो विज्ञानं प्रभवतीत्यसाम्प्रतम्; [२]तस्यानादिमुक्तत्वेनावरणस्यैवासम्भवादिति चेत्; तदयुक्तम्; अनादिमुक्तत्वस्यासिद्धेः। तथाहि–नेश्वरोऽनादिमुक्तो मुक्तत्वात्तदन्यमुक्तवत्[३]। बन्धापेक्षया च मुक्तव्यपदेशः; तद्रहिते[६] चास्याप्यभावः स्यादाकाशवत्।

---

# मीमांसकका पूर्वपक्ष

भावार्थः—अब मुख्य प्रत्यक्ष प्रमाणके कथन करनेका अवसर प्राप्त होनेसे उसकी उत्पत्तिका कारणस्वरूपप्रतिपादनार्थ प्रभाचन्द्राचार्य न्यायसूत्र कहते हैं। अर्थात् सामग्री विशेषतासे संपूर्ण कर्मावरण नष्ट होनेपर जो अतीन्द्रियज्ञान पैदा होगा वही सर्वथा मुख्य प्रत्यक्ष-ज्ञान कहलाता है।

विशेष रीतिसे प्रत्यक्ष-ज्ञान प्राप्त होता है, वही ज्ञान संपूर्णतः विशदरूप अतीन्द्रिय प्रत्यक्ष ज्ञान है। इस सूत्रमें ज्ञानावरणादिप्रतिपक्षभूत जो आवरणथे वे समस्त देश कालानुसार विशेष सामग्री मिलनेसे विघटित अर्थात् नष्ट प्राय होनेसे अन्तरंगलक्षण सम्यग्दर्शनादिक तथा वहिरंगलक्षण अनुभवादिक सामग्रीसे समग्रत्वपन प्राप्त हुआ। उसकी बजहसे अवधिज्ञान, मनःपर्ययज्ञान तथा केवलज्ञानादिपर क्षयोपशम क्षयरूपतासे समस्त आवरणका अभाव हो जानेसे विशेषतः अवधिज्ञान, मनःपर्ययज्ञान तथा केवलज्ञान निरावरणभूत विशुद्ध होगये हैं। क्योंकि अपने-अपने विषयमें स्पष्ट रीतिसे इन तीनों ज्ञानोंमें स्व-पर अवभासित्वपन आनेसे विशद प्रत्यक्ष स्वरूपमें इनका प्रवेश होचुका है। जिस ज्ञानमें स्पष्टत्व आनेपर उस ज्ञानमें संशय, विपर्यास तथा अनध्यव-सायादिकोंका सर्वथा अभाव हुआ। पश्चात् रूपी पदार्थोंमें तथा परमनोगत विषयमें जाननेमें किसी प्रकारका प्रतिवंध नहीं रहा। तब अवधिज्ञान मर्यादित-रूपी पदार्थोंमें पदार्थोंको स्पष्ट रीतिसे जानने लगा। एवं मनःपर्ययज्ञानभी दूसरोंके मनोगत व्यापारोंको सूक्ष्म-रीतिसे यदि सरलहो या टेड़ाहो इन दोनों प्रकारके पदार्थोंको विशद रीतिसे जानने लगा। तथा केवल ज्ञान मूर्तिक और अमूर्तिक ऐसे त्रिकालवर्ति समस्त चराचर पदार्थोंको अत्यन्त स्पष्ट रीतिसे जानने लगा। अतः ये तीनों ज्ञान अतीन्द्रिय प्रत्यक्ष हैं इनमें इन्द्रिय तथा मनकी अपेक्षा नहीं है। इनके अनपेक्षत्वसे सकल आवरणरूपी कलंक नष्ट होकर विशुद्धत्व प्राप्त होगया है। इसलिये संपूर्णतासे विशद हैं। जो ज्ञान विशद नहीं है वह ज्ञान सावरणमय होनेपर हमारे प्रत्यक्ष ज्ञानवत् अविशद है अर्थात् इन्द्रिय तथा मनकी सहायतासे पदार्थको जाननेवाला सांव्यवहारिक प्रत्यक्ष है। यहाँपर बोद्ध प्रश्न करता है कि, यदि आवरण प्रसिद्ध होगा तो उसका नाशहोनेसे ज्ञान प्राप्त होगा?। किन्तु आवरणही नहीं है तो ज्ञान कहाँसे पैदा होगा। आवरण ह्मने शरीर, रागादिक अथवा देशकालादिक हैं?। किन्तु शरीरादिक आवरण नहीं हैं उनका सद्भाव होनेपरभी पदार्थोंका उपलम्भ

प्रतीत होता है। उसका उपलम्भप्रतिबंधकही कांड़पटादिक लोकमें प्रसिद्ध आवरणहैं जैसे सुदर्शनमेरू पर्वत दूरदेशवर्ति है, रामरावणादिक कालसे दूरवर्ति हैं तथा परमाणु आदिक सूक्ष्म होनेसे स्वभावसे दूरवर्ति हैं। मूल, कील तथा उदकादिक एवं भूमि वगैरह ये प्रसिद्ध आवरणहैं ऐसा यदि कहोगे तो तुह्मारा कहना असार है। अर्थात् आवरणका अभाव तुम नहीं करसकते क्योंकि, सातिशयऋद्धिधारी योगियोंके द्वाराभी देशकालादिकका आवरण नष्ट नहीं किया जाता है। तथा अन्य किंचित्भी ज्ञानका आवरण प्रतीत नहीं होता है इसप्रकार सामग्रीविशेषविश्लेषित अखिल आवरण जो आपने कहाहै वह योग्य नहीं है। ऐसा मीमांसकका पूर्वपक्ष उठाकर आचार्य उनका निराकरण करते हैं।

शरीरादिक आवरण नहीं हैं तद्व्यतिरिक्त अर्थात् शरीरादिक छोड़कर कर्मही आवरण प्रसिद्ध है। वह अनुमान प्रमाणसे सिद्ध किया जाता है। उसी प्रकार 'स्वपरावभासी' अर्थात् सम्यग्ज्ञान अपने स्वरूपको तथा परस्वरूपको यथार्थ रीतिसे जानने योग्य प्रमेय वस्तु तत्वको अन्तरंग व वहिरंग वृत्तिसे जानता है। आत्मा गुणी है सम्यग्ज्ञान गुण है इन दोनोंका अविनाभाव सम्वन्ध होनेसे एकको छोड़कर दूसरा अकेला नहीं रहता है अतएव हीनगर्भादि शरीर विषयमें आत्माकी विशिष्ट अभिरति (प्रीति) देखी जाती है। अनादि कालसे आत्मा अपनेस्वस्वरूपसे च्युत होकर कर्मजन्य वैभाविक कुत्सित शरीरादि नाशवंत पदार्थोंपर प्रेम करता आरहा है। अपने शरीरसे अत्यंत भिन्न कलत्रादि विषयोंमें एवं पुष्पमाला चंदनादि परपदार्थोंपर औषधतन्त्रादिक उपयोगजनित प्रेमही विशिष्ट अभिरति कहलाती है। इस विषयमें परोपदेश विना स्वयमेव आत्मा मग्न होता है क्योंकि संसारी प्राणियोंको मोहोदय होनेसे मदिरादिवत् अर्थात् शराव पीकर नशासे जिसप्रकार आदमी अपनी पत्नीको माँ कहता है, एक दफे अपनी माँको भी पत्नी कहता है। उसी प्रकार यह संसारी आत्मा मोहरूपी शराव पीकर अपने निजस्वरूपसे भ्रष्ट होकर वहिरंग शरीरादि विषयोंमें मग्न होगया है, अतः इस आत्माको मोही संसारी विषयकषायी कहते हैं। यहाँ मोहोदयवत् शरावका दृष्टान्त समझना चाहिये।

फिर प्रश्न करता है कि, कर्ममात्रही प्रसिद्ध है, ननु आवरण? जब आवरण सिद्ध होगा तब प्रमाण देकर आवरण है ऐसा सिद्ध करना चाहिये। हमारा इसी आवरण विषयमें वादविवाद है, यदि तुम ऐसा कहोगे तो जवाव दियाजाता है कि, जो हमारा छद्मस्थज्ञान है वह संसारी आवरण सहित

होनेसे समस्त चराचर पदार्थोंको जाननेमें असमर्थ है। अतएव अपने विषयमें सावरणही रहेगा, तथा अशेषविषयभूत अर्थमें प्रवेश नहीं करता है ऐसा अप्रवृत्तिमत् प्रतिज्ञा हेतु देकर आचार्य संसारी ज्ञानको सावरण सिद्ध करते हैं। जिस प्रकार नेत्ररोगी एकही चंद्रमाको देखकर उस चंद्रमामें दो चंद्र हैं ऐसा अनुमान करता है उसी प्रकार यह सावरण ज्ञान अशेषविषयको जाननेमें असमर्थ है। फिर शंकाकार शंका करता है, विज्ञानमें अशेषविषय कहांसे सिद्ध होगा ? यदि आप आवरणका नाश होनेपर वह संपूर्ण पदार्थोंको विषय करेगा ऐसा कहोगे तो अन्योन्याश्रयनामका दोष आता है। क्योंकि ज्ञानमें आवरण सिद्ध होगा तो आवरण नष्ट होनेसे वह ज्ञान अशेषविषयको प्रकाशित करेगा। आवरणही सिद्ध नहीं है तो वह ज्ञान समस्त वस्तुको कैसे सिद्ध करेगा ? अतः ज्ञान सकल विषयी है ऐसा कहनाही व्यर्थ है। तब आचार्य उत्तर देते हैं कि, यदि तुम अनुमानकी इच्छा करोगे तो अवश्यही संपूर्ण आवरणका अभाव होनेपर, पहलेही तुमने सकल प्राणिमात्रको अशेषविषयत्व है ऐसा व्याप्तिज्ञान माना है। जैसे जो ज्ञान अपने विषयमें अस्पष्ट है वही ज्ञान सावरणमय है। दृष्टान्त अंधकारका अभाव होनेपर अंतरित वृक्षसमुदायका ज्ञान स्पष्टही कहलाता है, वैसे सर्वसत् अनेकान्तात्मक ज्ञान व्याप्ति ज्ञान है। तथा मिथ्यादृष्टियोंको सर्वत्र अनेकान्तात्मक ज्ञान माननेमें विपरीत ज्ञान सावरण है जैसे मिथ्या ज्ञानवत् (एकान्तरूप ज्ञान) धतूरा पीनेवाले आदमीका विपरीत ज्ञान मिट्टीके टुकड़ेको भी कांचका टुकड़ा है ऐसा जानता है। अतः यह सिद्ध हुआकि, आवरण पौद्गलिक कर्मही है।

पुरुषज्ञानाद्वैतवादी कहते हैं कि, अविद्या 'आत्माको आवरण है, न तु पौद्गलिककर्म आवरण होसकता है। मूर्तिकपौद्गलिककर्म अमूर्तिक ज्ञानादिकको आवरण नहीं होसकता है; अन्यथा शरीरादिकोंसे भी अमूर्तिक ज्ञानादिकोंको आवरणत्वका प्रसंग आजायगा, इस प्रकार कहनाही मिथ्या है। शराव आदिक मूर्तद्रव्यसे भी अमूर्तिक आत्मा तथा ज्ञानादिकको आवरण होता है। ऐसा अवलोकनमें आता है। तुम यदि अविद्यास्वरूपको आवरण कहोगे तो आकाशभी अमूर्त द्रव्य है उसकोभी ज्ञानादिकका आवरण कहा जावे इसमें क्या आपत्ति है ? आकाश अविद्यासमान अमूर्त होनेसे, आकाश, और अविद्या इन दोनोंमें अमूर्तत्व होनेपर परस्परमें अविरुद्धपन देखा जाता है अत एव ऐसा नहीं हो सकता है। इसप्रकार कहोगे तो शरीरादिकभी आवरण नहीं होसकते हैं। उसके विरुद्ध पौद्गलिककर्मही आवरण प्रसिद्ध है, अनादि प्रवाहसे प्रवर्तमान ज्ञानादिकों पर

अविद्याका आवरण निरोध होनेसे, परस्पर विरुद्ध अवस्थामें आवार्य तथा आवारक-भाव नहीं देखे जाते हैं। 'यथा मदिरादिवत्' जैसे शरावादिक मादक पदार्थ हैं वैसे पौद्गलिककर्मभी आवरण है देखा जाता है। उसी प्रकार कर्मसंतप्तआत्मा-पर मिथ्या ज्ञानादिकका उदय होनेसे सम्यग्ज्ञान आच्छादित होजाता है। जैसे शराव पिया हुआ आदमी उन्मत्त होकर अद्वा-तद्वा वकता रहता है वैसे मिथ्या ज्ञानके उदयसे स्वभावसे च्युतहोकर वैभावमें आकर अनेक प्रकारके कर्मबंध संसारी आत्मा बांध लेता है। अतः मिथ्याज्ञानजनित अपर मिथ्याज्ञानसे अनेकान्तदोष नहीं आता, इसलिये परापर पौद्गलिक कर्मोदय होता है ऐसा देखने में आया है। उदाहरण—अपर-अपर उन्मत्तादिकोंका सद्भाव होनेसे उनमें परस्पर उन्मत्तादि संतानकी परिपाटी दिग्दर्शित होती है।

यौगवादी कहते हैं कि, कर्म आत्मगुण होनेसे उसमें पौद्गलिकत्व कैसे आता है? आचार्य उत्तर देते हैं—वे भी अपरीक्षक हैं। अर्थात् कर्मको आत्माके गुण मानने पर परस्परमें विरोध आता है, क्योंकि सदैव आत्माको कर्मवंधही नहीं होगा तो आत्माको मुक्तिका प्रसंग आजायगा ऐसा नहीं होसकता है। फिर यौगवादी कहता है जो जिसका गुण है वह उसका पारतंत्र्यनिमित्त नहीं होसकता, जैसे पृथिवी आदिमें रूपादिक गुण देखे जाते हैं; वैसे आत्माके गुण धर्माधर्मक कर्म हैं इस प्रकार यौगवादियोंने माना है। अतः कर्म आत्माको पारतन्त्र्य नहीं कर सकता है। आचार्य कहते हैं कि, ऐसा नहीं होसकता है—क्योंकि संसारी आत्मा कर्माधीन है ऐसा हम प्रमाणसे सिद्ध करते हैं। जिस प्रकार यह आत्मा परतंत्र है हीनस्थान अर्थात् अनादिसे शरीरधारी होनेसे परिग्रहके समान कर्माधीन है। उसी प्रकार शरावसे नशा चढ़नेसे उन्मत्त हुआ पुरुष अत्यंत अशुद्ध स्थानमें ही अपना आवासकर वैठ जाता है, तद्वत् यह कर्मपारतन्त्र्य आत्मा अपने शुद्धस्वभावसे च्युत होकर अशुद्ध वैभावमें आकर अपना आवासस्थान बनालेता है। हीनस्थानही आत्माको शरीर है, वह आत्माको दुःखदायक होनेसे 'कारागारवत्' अर्थात् जेलखानाके समान है। अतएव परिग्रहधारी संसारी प्रसिद्धही है। तथा देवोंमें भी शरीररूपी परिग्रहका अभाव नहीं है इसलिये हमारा पक्ष अव्याप्ति नहीं होसकता। देवोंमें भी मरण होनेसे उनको दुःख होता है, ऐसा प्रसिद्ध हेतुका अवलोकन किया जाता है। जो आत्माको परतन्त्र करता है वही यहाँपर कर्म प्रसिद्ध है; हमारा अभिप्राय सिद्ध हुआ कि, कर्मको पौद्गलिकत्व कहनेमें दोप नहीं है। एवं पौद्गलिक कर्म आत्माको पारतन्त्र्य करनेसे,

वेड़ीके समान बंध करनेमें समर्थ है। इस हेतुमें क्रोधादिकोंसे व्यभिचार (दोष) नहीं आता। पौद्गलिक कर्मोंका जीवपरिणाम होनेसे उनमें पारतन्त्र्य स्वभाव देखा जाता है, किन्तु क्रोधादिक जीवके परिणामोंमें पारतन्त्र्य निमित्त नहीं हैं।

सांख्य कहते हैं कि, सत्य है, कर्म आत्मगुण नहीं है किन्तु कर्म प्रधानका परिणाम है जैसे—पुण्य व पाप ये दोनों शुक्ल तथा कृष्ण कर्मही हैं, इस प्रकार उनके मतमें कहा है। ऐसा कहनाभी सांख्यका मनोरथमात्रही है। प्रधान यह असत्य है प्रधानका जो परिणाम बुध्यादिकोंमें विकार सो असम्भव है। वह असत्यस्वरूपी है ऐसा हम इसी प्रकरणमें कहनेवाले हैं। कर्म आत्मपरिणामी न होकर प्रधानका परिणाम है ऐसा सांख्य सिद्धान्त असत्य है। अर्थात् कर्म आत्मपारतन्त्र्यनिमित्तत्वका अभाव माननेसे उस कर्मकाही अभाव होगा। अन्यथा घटादिकोंमें भी कर्मत्वका सद्भाव मानना पड़ेगा, प्रधान पारतन्त्र्यनिमित्तत्व कर्म है ऐसा कहोगे तो नहीं होसकता है। अर्थात् बंधसम्बन्धमें तथा मोक्षोपयोगमें प्रधानही कारण मानोगे तो आत्मकल्पना करना व्यर्थ हो जायगा। बंध, मोक्षका फलानुभव आत्मामेंही मानागया है इस प्रकारकी कल्पना करना वैयर्थ्य नहीं है। यदि प्रधानकोही कर्मकर्तृत्व मानोगे तो कर्मफल भोक्तृत्वभी प्राप्त होगा तथा उस प्रधानमें प्रमाणसामर्थ्य प्राप्त होजायगा तो आत्मामें कर्मकृतफलका नाश व कर्मकृतफलका आगमन दोष पैदा होगा ऐसा नहीं है। आत्मामें चेतनत्व होनेसे कर्मका फलानुभवन बंध, मोक्ष हैं, किन्तु प्रधानमें अचेतनत्व होनेसे बंध, मोक्षका फलानुभव नहीं है। ऐसा कहनाही ठीक नहीं, क्योंकि मुक्तात्माओंमेंभी कर्मफलानुभवका प्रसंग आजायगा। मुक्तात्मामें प्रधान संसर्गका अभाव है अतः कर्मफलानुभव नहीं आता, यदि ऐसा कहोगे तो संसारी आत्माओंमेंही प्रधानका संसर्ग होनेसे बंध फलानुभव है, तो आत्मामेंही बंध सिद्ध हुआ। उस संसर्गसे बंध फलानुभवन निमित्त बंध देखा जाता है, बंधही संसर्ग है तथा पुद्गलकोही हमने प्रधान कहा है ऐसा नाममात्रका भेद है।

फिर सांख्य प्रश्न करते हैं कि, प्रसिद्ध ऐसा पौद्गलिक कर्म कार्यकारण प्रवाहसे प्रवर्तमान अनादि कालसे चलता हुआ विनाशहेतुभूतसामग्रीविशेषका ही अभाव है, उससे विश्लेषित अखिल आवरणत्व ज्ञानमें कैसे सिद्ध होगा ?। यहभी कहना तुम्हारा उचित नहीं है, क्योंकि, सम्यग्दर्शनादित्रय लक्षणका

कर्मावरण विनाश होजाना यह प्रसिद्ध है। कैसा ?–अनादिसे पूर्वसंचित कर्मभी विशेष चारित्रसे नष्ट होजाता है। यथा–कर्मकी निर्जरा दो प्रकारकी है–उपक्रम, अनुपक्रम, वहां उपक्रमकी निर्जरा बारा प्रकारके तपसे साध्य हैं। तथा अनुपक्रमकी निर्जरा यथा समय संसारी जीवोंको प्राप्त होती है। आप संपूर्ण रीतिसे पूर्वोपार्जित कर्मकी निर्जरा होती है, ऐसा कैसे सिद्ध करते हैं ? ऐसा कहोगे तो हम अनुमान प्रमाणसे निश्चय करसकते हैं इस प्रकार सांख्यको आचार्यने उत्तर दिया। जैसे क्वचित् आत्मामें संपूर्णतः कर्मोंकी निर्जरा देखी जाती है, अर्थात् फलदानका विपाकही निर्जरामें कारण है। और जिस आत्मामें कर्मोंकी निर्जरा नहीं होती है, तो उस आत्मामें कर्मोंका विपाकभी नहीं है। यथा कालादिकोंसे कर्मोंका विपाक देखनेमें आता है इसलिये क्वचित् आत्मामें समस्त कर्मोंकी निर्जरा होती है, यह साधन असिद्ध नहीं है। उसी प्रकार फलावसानमें कर्मोंकी विपाकता दृग्गोचर है, जैसे वर्तन, अग्नि, जल आदिक सामग्री विशेषतासे ओदन (भात) में विपाकावस्था देखी जाती है। यह दिया हुआ हमारा दृष्टान्तभी असिद्ध नहीं है। यदि ऐसा सांख्य नहीं मानेंगे तो कर्मोंमें नित्यत्वका प्रसंग आजायगा। किन्तु कर्म विनाशी होनेसे नित्य नहीं कहलाते हैं। अतः सांख्यका मानाहुआ कूटस्थनित्यत्वका खंडन हुआ।

आगामी कालमें आत्मामें प्रवेश होनेवाला कर्म, संवरतत्वसे रोकाजाता है। तत्वार्थसूत्रमें कहा है कि, "अपूर्वकर्मणामाश्रवनिरोधः संवरः" इस सूत्रानुसार आश्रवके पांच भेद हैं अतः मिथ्यादर्शन, अविरति, प्रमाद, कषाय और योग इनके आश्रयसे कर्मोंका आश्रव होता है। वह संवर गुप्ति, समिति, धर्म, अनुप्रेक्षा, परीषहजय–तथा चरित्रसे प्राप्त किया जाता है. इस प्रकार आगममें विस्तारसे कहाहै सो देखें। संवर, तथा निर्जरासे सम्यग्दर्शनादिक आत्मसाक्षात्कार होनेसे क्वचित् आत्मामें परमप्रकर्ष होनेपर कर्मोंमें संतानरूपसे अनादित्व रहनेपरभी प्रक्षय (विनाश) प्रसिद्ध ही है। जैसे अनादिपरिपाटीसे विद्यमान शीतस्पर्श, उसका विपक्ष उष्णस्पर्शका परमप्रकर्ष होनेपर निर्मूलतः शीतस्पर्शका विध्वंस होजाता है। कभी भी उत्पन्न नहीं होता। वैसे कार्यकारणरूपसे अनादिप्रवाही बीजांकुर संतानभी उसके प्रतिपक्षभूत अग्निके द्वारा जलादिया जाय तो निर्दग्ध हुआ बीजांकुर नहीं पैदा करता है। इस प्रकार कहनेमें हम समर्थ हैं ऐसा प्रभाचन्द्राचार्यने सांख्योंको कहा है।

पुनः सांख्य कहता है कि, परमप्रकर्षमात्रसे कर्मप्रक्षयमात्रही, सिद्ध है, किन्तु संपूर्णतासे सम्यग्दर्शनादिकोंका कर्मप्रक्षय नहीं है, ऐसा कहनाही

असंगत है। सम्यग्दर्शनादि प्रकर्ष क्वचित् आत्मामें प्रसिद्ध है। जैसे जिस आत्मामें तारतम्य प्रकर्ष है, वैसे क्वचित् आत्मामें परमप्रकर्षभी है। यथा शीतस्पर्शका नाश उष्णस्पर्शसे होता है, तथा तारतम्यप्रकर्ष असंयत सम्यग्दृष्ट्यादिकोंमें सम्यग्दर्शनादिकोंका सद्भाव देखा जाता है। और दुःखप्रकर्षसे व्यभिचार नहीं आता, अर्थात् सातवें नरकमें नारकीयोंको दुःखका परमप्रकर्ष प्रसिद्ध है। सर्वार्थसिद्धिमें देवोंका सुखका परमप्रकर्ष देखा जाता है। तथा मिथ्यादृष्टियोंमें अनंतानुवंधि क्रोधादि कषायोंका परमप्रकर्ष है। इसमें ज्ञानहानिप्रकर्षसे अनेकान्त दोष नहीं आता, उसमेंभी क्षायोपशमिकतासे हीयमानकी अपेक्षासे प्रकृष्यमानता देखनेमें आती है। किन्तु केवलीमें सम्यग्दर्शनादिकोंका परमप्रकर्ष प्रसिद्ध है। केवल ज्ञानमें हानीका असंभव है अतः उस क्षायिकज्ञानमें तारतम्यप्रकर्ष कहां है? अर्थात् नहीं, जिससे अनेकान्त दोष आयगा।

इस प्रकार संपूर्णतासे कर्म नाश करनेका प्रयोग करना चाहिये जिसके अतिशयसे जिसकी हानीभी होगी। जिस प्रकार अग्निका अत्यंत अतिशय होनेसे शीतकीभी अत्यंत हानी होजाती है। उसी प्रकार सम्यग्दर्शनादिकोंका अत्यंत अतिशय क्वचित् आत्मामें अवश्य है। तथा कर्मावरणहानीभी क्वचित्पुरुषविशेषमें परमप्रकर्षतासे देखीजाती है। अर्थात् प्रकृष्यमाण होनेसे परिमाणके समान दृग्गोचर होता है, यहां हमारा दिया हुआ साधन असिद्ध नहीं है। तथा प्रकृष्यमाण आवरणकी हानी होनेपर, रत्नोंपर, जो मलभाग था वह नष्ट होनेसे उसपर कांति पैदा होगई है। वैसे क्वचित् आत्मामें आवरणका अदृश्य होनेसे उस आत्मामें विशिष्ट शुद्धपन पैदा होगयाहै।

जिस प्रकार प्रकाशात्मक ज्ञानावरणकी हानी उत्कृष्टतासे होनेपर ज्ञानका परमप्रकाशमानत्व देखा जाता है जैसे लोचनको प्रदीपादिकसे स्पष्ट वस्तुज्ञान होजाना है वैसे आवरणका अभाव होनेसे ज्ञान स्वयमेव स्वपरप्रकाशमान होजाता है। उसी प्रकार आवरणप्रसिद्धिके समान उस आवरणका अभावभी समस्त प्रमाणोंसे प्रसिद्ध है, आवरणका अभावही अवशेषअर्थगोचरज्ञानको दूसरोंके द्वारा अवश्य माना जाता है अर्थात् परकी अपेक्षासे एकान्तवादियोंको माननाही चाहिये। अंशतः यदि आवरणका सद्भाव माना जायगा तो क्वचित् शुद्धात्मामें अवशेषअर्थगोचरत्वका असंभव होगा। जहां आवरणका सद्भाव होगा वहां क्वचित् आत्माको प्रतिवंध प्राप्त होगा किन्तु ऐसा नहीं होता।

वौद्ध कहते हैं कि, आगमद्वारा अशेषार्थगोचरज्ञान होजाता है,

ऐसा कहना भी अनुचित है, क्योंकि विशद ज्ञानही प्रसिद्ध है तथा आगमज्ञान विशद नहीं है। आगमभी अशेषार्थ गोचर नहीं है, अर्थपर्यायमें उसकी प्रवृत्ति नहीं है। एवं अर्थपर्याय तो क्षणध्वंसी है अर्थात् बौद्धोंने माना हुआ अर्थ अवस्तुस्वरूपी होनेसे असत् है। जो असत् अर्थ है वह अर्थ क्रियाकारी नहीं होसकता क्योंकि आकाशपुष्पके समान है। अन्यथा इसको अवस्तुत्व प्रसंग आजायगा। तथा इन्द्रियजन्य ज्ञान अतीन्द्रियात्मकअर्थमें प्रवेश नहीं करता है, अर्थात् प्रसिद्ध रीतिसे प्रतिबंधक है, इन्द्रियोंका रूपीपदार्थोंमेंही नियमित विषयमें प्रवेश प्रतीत है।

योगजधर्मग्राही इन्द्रियज्ञान गगनादि (आकाशादि) अशेष अतीन्द्रियार्थको जाननेमें समर्थ है, किन्तु इन्द्रियजज्ञान अशेषार्थको प्रतीत करता हुआ उसमें कैसा प्रतिबंधकपन आसकता है?। ऐसा कहनाही ठीक नहीं है, हमने (आचार्यने) योगजधर्मग्राहीइन्द्रिय ज्ञानका प्रथमाध्यायमें खंडन किया है।

तब भावनाप्रकर्षजयोगिविज्ञानमें उक्त दोष नहीं आसकता है। भावना दो प्रकारकी हैं, श्रुतमयी तथा चिंतामयी वहां श्रुतमयी भावना श्रवण करने वालोंसे 'सर्व क्षणिकं सत्वात्' अर्थात् बौद्धोंका मत सर्वथा क्षणिक होनेपर उत्पद्यमान ज्ञानसे श्रुतशब्दवाच्यको पैदा करता है, तथा वही श्रुतमयी परमप्रकर्षताको निर्माण करती हुई स्वार्थानुमानज्ञानलक्षणचितासे चिंतामयी भावनाको प्राप्त होती है। तथा प्रकृष्यमाण होनेसे परमप्रकर्षताको प्राप्त होकर योगिप्रत्यक्षको उत्पन्न करती है। ऐसी अवस्थामें मुख्यप्रत्यक्षज्ञानके आवरणका अभाव कैसे प्राप्त होगा ? यहभी तुम्हारा कहना प्रलापमात्र है। क्षणिकनैरात्म्यादिभावनाही चिंतामयी तथा श्रुतमयी भावना मिथ्यारूप होनेसे उस मिथ्याज्ञानसे परमार्थविषययोगिज्ञान नहीं पैदा होता है। ऐसा मानने पर अतिप्रसंग आयगा अर्थात् द्विचंद्रादिज्ञानकोभी योगिज्ञानजनकत्वका प्रसंग आजायगा। जिससे वस्तुक्षणिकत्व, नैरात्म्य तथा शून्यत्वको प्राप्त होवें ऐसा नहीं होसकता है, आगे हम कहेंगे।

आचार्य समर्थन करते हैं कि, समस्त प्राणियोंको अशेषविषयज्ञान क्यों नहीं होगा ? सुगतके समान। यदि समस्त प्राणियोंमें उस प्रकारकी भावनाका अभाव है ऐसा कहोगे तो नहीं। सकलतत्वसंपन्नभावनाप्रवृत्तोंमें समानभावना क्यों नहीं होगी?। प्रतिबंधककर्मका सद्भाव कहोगे तो भावनाप्रतिबंधककर्मका अपाय होनेसे तथा योगिज्ञानप्रतिबंधककर्मका

देता है लेता है, छिपाने लायक बातको कहता है और मित्रसे गुह्यबात अर्थात् रहस्य पूछता है, खाता है और खिलाता है यह छः प्रीति या स्नेहके लक्षण होते हैं।

**ददाति प्रतिगृह्णाति नान्यथैषा प्रसिद्ध्यति।**
**इत्थंरूपेण कीलेन महादेवेन कीलितम् ॥ ३२७ ॥**

देता है और लेता है अन्यथा यह बात प्रसिद्ध नहीं होती है। अर्थात् अकेली बात केवल देना या केवल लेना निभता नहीं है। इसप्रकार मन्त्रसे महादेवजीने यह कील दिया है। अर्थात् देना लेना साथही चल सकते हैं, अकेले पृथक् पृथक् नहीं चलते हैं।

**दुर्जनदूषितमनसां पुंसां सुजनेऽप्यविश्वासः।**
**बालः पायसदग्धो दध्यपि फूत्कृत्य पिबति ॥ ३२८ ॥**

दुष्ट मनुष्योंके द्वारा जिन मनुष्योंका मन दूषित हो चुका है वे सज्जन पुरुषोंका भी विश्वास नहीं करते हैं। जैसे बच्चा या नासमझ व्यक्ति दूधसे जलनेपर दहीको फूंक देकर पीता है।

**जड़बुद्धिर्जड़ो मूर्खः कथं जानामि निर्गुणम्।**
**दण्ड एव हि मूर्खाणां सन्मार्गप्रापकः प्रभो ॥ ३२९ ॥**

जड़बुद्धिवालामैं मूर्ख लण्ठ निर्गुणको कैसे जान सकता हूं। हे स्वामिन् मूर्खोंको दण्डही अच्छे रास्तेपर पहुंचानेवाला होता है।

**निर्द्रव्यं पुरुषं सदैवविकलं सर्वत्र मन्दादरम्**
**तातभ्रातृसुहृज्जनादि कुपितं दृष्ट्वा न संभाषितम्।**
**भार्या रूपवतीकुरङ्गनयना स्नेहेन नालिङ्गते**
**तस्माद् द्रव्यमुपार्जयाशु सुमते द्रव्येण सर्वे वशाः ॥ ३३० ॥**

धनहीन मनुष्य हमेशाही व्याकुल रहता है। सब जगह उसका आदर कम होता है। पिता, भाई तथा मित्र सब उसपर क्रोध करते रहते हैं। देखकर उससे कोई बातभी नहीं करता है। हरिणके समान सुन्दर नेत्रवाली और रूपवती स्त्रीभी उसका स्नेहसे आलिङ्गन नहीं करती है। इसलिये हे बुद्धिमान् पुरुष शीघ्र द्रव्यका उपार्जन कर क्योंकि धनके सब वशीभूत हैं।

माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते ।
भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते ॥
अर्थप्रार्थनशङ्कया न कुरुतेऽप्यालापमात्रं सुहृत् ।
तस्माद्द्रव्यमुपार्जयाशु सुमते द्रव्येण सर्वे वशाः ॥ ३३१ ॥

माता निर्द्रव्य पुत्रकी निन्दा करती है, पिताभी उसपर प्रसन्न नहीं रहता है, भाई उससे संभाषणभी नहीं करता है, नौकर गुस्सेमें रहता है, पुत्र उसकी आज्ञा नहीं मानता है और धर्मपत्नी उसका कभी आलिङ्गन नहीं करती है, मित्र धन मांगनेकी आशङ्कासे वातचीतभी नहीं करता है इसलिए हे अच्छी वुद्धिवाले मनुष्य ! शीघ्र धनार्जन करो क्योंकि धनके सव वशीभूत हैं ।

इन्द्रं द्व्यक्षिधरं त्वमन्थमुदधिं पञ्चाननं पद्मजं
चाब्धिं स्वादुजलं शिवं सितगलं कामं च सद्विग्रहम् ।
शैलान् पक्षधरांस्तथैव च हयांल्लक्ष्मीपतिं पिङ्गटं
दृष्टं सर्वमिदं क्वचिन्न रघुराड्दत्तं स्वयं हारितम् ॥ ३३२ ॥

इन्द्रको दो आंखवाला, समुद्रको मन्थनरहित, कमलसे उत्पन्न ब्रह्माको पांच मुखवाला और समुद्रको मधुरजल युक्त, महादेवजी सफेद गलेवाला और कामदेव शरीर सहित, पहाड़ोंको पंखवाला और उसी प्रकार घोड़ोंको भी पंखवाला और विष्णु पीलेवर्णवाला देखा जा सकता है अर्थात् ये सव असम्भव वातेंभी सम्भव होसकती हैं परन्तु रघुवंशके राजा रामके द्वारा जो चीज दी जा चुकी है स्वयं छीनते कभी नहीं देखी गई है ।

यस्य नास्ति विवेकस्तु केवलं यो वहुश्रुतः ।
स न जानाति शास्त्रार्थान् दर्वी पाकरसानिव ॥ ३३३ ॥

जिसको ज्ञान नहीं है और केवल वहुश्रुत है अर्थात् इधर-उधर सुन सुनाकर कुछ हासिल किया है वह व्यक्ति शास्त्रोंके गम्भीर अर्थोंको नहीं जानता है जैसे कड़छी अर्थात् चाटू पक्वान्नके रसोंको नहीं जानती है ।

अधीत्य चतुरो वेदान् धर्मशास्त्राण्यनेकशः ।
परं तत्त्वं न जानाति दर्वी पाकरसानिव ॥ ३३४ ॥

चारों वेदोंको और धर्मशास्त्रोंको अनेक दफा पढकरभी जो व्यक्ति परमतत्त्व अर्थात् रहस्यको नहीं जानता है वह चाटूकी तरह है । जैसे चाटू पाक-

रसको नहीं जानता है अर्थात् केवल ऊपरही तैरता है। रहस्यको नहीं समझता है।

**लग्ने शुक्रो बुधो यस्य यस्य केन्द्रे बृहस्पतिः।**
**दशमोऽङ्गारको यस्य स जातः कुलदीपकः॥ ३३५॥**

लग्नमें जिसके शुक्र और बुध हैं और केन्द्रमें जिसके बृहस्पति है और दशममें जिसके अङ्गारक है वह कुलका दीपक रूपही बच्चा पैदा हुआ है।

**धष्टपुष्टो भवेद्दादा सुन्दरी वहिनी तथा।**
**दन्तभग्नो भवेद्बाबा आवा च गतभर्तृका॥ ३३६॥**

दादा धष्ट-पुष्टही होना चाहिए तथा वहिनी सुन्दर होनी चाहिए, जिसके दांत टूट गये हों वह बावा होना चाहिए और जिसका पति मर चुका हो वह आया होनी चाहिए।

**दानं प्रियवाक् सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम्।**
**वित्तं त्यागसमेतं दुर्लभमेतच्चतुर्विधं भद्रम्॥ ३३७॥**

प्रियवाणी सहित दान देना, अभिमान रहित होकर ज्ञानी होना, पराक्रम करसकनेपरभी क्षमायुक्त होना और धनवान् होकरभी त्यागी होना यह चारों वातें अच्छी हैं तथापि अत्यन्त दुर्लभ हैं।

**शक्ति करोति संचारे शीतोष्णे मर्षयत्यपि।**
**दीपयत्युदरे वह्नि दारिद्र्यं परमौषधम्॥ ३३८॥**

संचरण अर्थात् घूमने-फिरनेमें शक्ति पैदा करता है अर्थात् दरिद्र इधर उधर खूब भटकता है, सर्दी और गर्मीको बर्दाश्त करता है, पेटकी अग्निको दीप्त करता है इसलिए दरिद्रता अत्यन्त उत्कृष्ट औषध है।

**ऐश्वर्यतिमिरं चक्षुः पश्यन्नपि न पश्यति।**
**तस्य निर्मलतायां तु दारिद्र्यं परमौषधम्॥ ३३९॥**

ऐश्वर्यरूपी तिमिररोगसे आक्रान्त नेत्र; देखते हुएभी नहीं देखते हैं अर्थात् ऐश्वर्यसे मस्त आदमी सब कुछ देखता हुआभी नहीं देखता है, उस तिमिररोगको मिटानेके लिये दरिद्रता सबसे सुन्दर तथा उत्कृष्ट औषध है अर्थात् दारिद्र्य ऐश्वर्याभिमानको खत्म कर देता है।

वयोवृद्धास्तपोवृद्धा ज्ञानवृद्धा बहुश्रुताः ।
इत्येते धनवृद्धस्य द्वारे तिष्ठन्ति किंकराः ॥ ३४० ॥

उम्रमें बड़े, तपश्चर्याने बड़े, ज्ञानमें बड़े और बहुत शास्त्रोंको पढ़े हुए मनुष्य ये सब धनसे वृद्ध अर्थात् धनवान् मनुष्यके दरवाजेपर नौकर होकर रहते हैं अर्थात् धनवान्की सब खुशामद करते हैं। धनके बिना कुछ काम नहीं चलता है।

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥ ३४१ ॥

जैसे प्रदीप्त अग्नि काष्ठोंको भस्मीभूत करदेती है उसी प्रकार हे अर्जुन ! ज्ञानरूपी अग्नि सब कायिक, वाचिक, मानसिक कर्मोंको नष्ट करदेती है। अर्थात् ज्ञानी मनुष्य कर्मके बन्धनोंसे छुटकारा पाजाता है।

एकेन तिष्ठताधस्तादन्येनोपरि तिष्ठता ।
दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥ ३४२ ॥

एक हाथके नीचे रहते हुए और दूसरे हाथके ऊपर रहते हुए इसप्रकार दोनों हाथोंने ही दाता और याचकका भेद बतादिया है। अर्थात् देनेवालेका हाथ ऊपर रहता है और लेनेवालेका नीचे, इसप्रकार हाथोंकी तरह दाताभी ऊपर रहता है बड़ा गिना जाता है और याचक नीचा गिना जाता है।

दिवा निरीक्ष्य वक्तव्यं रात्रौ नैव च नैव च ।
संचरन्ति महाधूर्ता वटे वररुचिर्यथा ॥ ३४३ ॥

दिनमें चारोंतरफ देखकर बोलना चाहिये और रात्रिको कभी भी नहीं बोलना चाहिये। क्योंकि महान् धूर्त इधर-उधर घूमते रहते हैं। जैसे वटके वृक्षमें वररुचि था।

दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः ।
सं नित्यमनुरक्तास्मि यथा सूर्यं सुवर्चला ॥ ३४४ ॥

चाहे दीन हो चाहे राज्यसे हीन हो जो मेरा पति है वही मेरा गुरु है। उसीमें हमेशा मैं अनुरक्त हूं। जैसे सूर्यमें सुवर्चला अनुरक्त रहती है।

दुर्जनं प्रथमं वन्दे सज्जनं तदनन्तरम् ।
मुखप्रक्षालनात् पूर्वं गुदप्रक्षालनं यथा ॥ ३४५ ॥

दुर्जनको पहिले नमस्कार करता हूं और सज्जनको बादमें नमस्कार करता हूं। जैसे मुख धोनेसे पहिले गुदाका धोना अनिवार्य है।

**कृते प्रतिकृतिं कुर्यात् हिंसने प्रतिहिंसनम्।**
**तत्र दोषो न पतति दुष्टे दुष्टं समाचरेत्॥ ३४६॥**

किये हुएका प्रतिकार करना चाहिये और हिंसाका जवाब प्रतिहिंसासे देना चाहिये। वहां दोष नहीं लगता है, दुष्टके साथ दुष्टताका वर्ताव करना चाहिये।

**दूरस्थाः पर्वता रम्या वेश्या च मुखमण्डने।**
**युद्धस्य वार्ता रम्या च त्रीणि रम्याणि दूरतः॥ ३४७॥**

दूरके डूंगर सुहावने लगते हैं और वेश्या मुखको अलंकृत करके दूर वैठी हुई वड़ी सुन्दर प्रतित होती है और लड़ाईकी कथा वड़ी अच्छी लगती है। ये तीनों चीजें दूरसे अच्छी लगती हैं. अर्थात् नजदीक जानेपर सव जगह निराश होना पड़ता है।

**यस्य भार्या विरूपाक्षी परमन्दिरकाङक्षिणी।**
**कुलक्षणा कुशीला च दूरतः परिवर्जयेत्॥ ३४८॥**

जिसकी भार्या विकृत आंखोंवाली हो, दूसरेके घरमें जानेकी आकांक्षा रखती हो, खराव लक्षणोंवाली हो, खराब आचरणवाली हो उसे दूरही छोड़देना चाहिए अर्थात् ऐसी स्त्रीके साथ कभी नहीं रहना चाहिए।

**विद्यते कलहो यत्र गृहे नित्यमकारणः।**
**तद्गृहं जीवितं वाञ्छन् दूरतः परिवर्जयेत्॥ ३४९॥**

जिस घरमें विना कारणही रोज झगड़ा होता हो उस घरको जिन्दगी चाहनेवाले मनुष्यको दूरसे ही छोड़देना चाहिए।

**गजं मत्तं द्विजं भ्रष्टं वृषभं काममोहितम्।**
**नृपमन्तःपुरगतं दूरतः परिवर्जयेत्॥ ३५०॥**

मस्त हाथीको, भ्रष्ट हुए ब्राह्मणको और कामातुर वैलको तथा रणवास में गये हुए राजाको दूरसे छोड़देना चाहिए।

**खरं श्वानं गजं मत्तं रण्डा च बहुभाषिणीम्।**
**राजपुत्रं कुमित्रं च दूरतः परिवर्जयेत्॥ ३५१॥**

गधेको, कुत्तेको, मस्त हाथीको और बहुत बकवाद करनेवाली स्त्रीको राजकुमारको और खराब मित्रको दूरसे ही छोड़देना चाहिए अर्थात् इनका सङ्ग नहीं करना चाहिए।

---

## परमात्मप्रकाशग्रन्थे प्रतिपादितम्—

अथ यः समभावं करोति तस्यैव निश्चयेन सम्यग्दर्शनज्ञान-चारित्राणि नान्यस्येति दर्शयति—

आगे जो जीव समभावको करता है, उसीके निश्चयसे सम्यग्दर्शन, सम्यग्ज्ञान, सम्यक्चारित्र होता है, अन्यके नहीं।

दर्शनं ज्ञानं चारित्रं तस्य यः समभावं करोति।
इतरस्य एकमपि अस्ति नैव जिनवरः एवं भणति ॥ ४० ॥

तथाहि—निश्चयनयेन निजशुद्धात्मैवोपादेय इति रुचिरूपं सम्यग्दर्शनं तस्यैव निजशुद्धात्मसंवित्तिसमुत्पन्नवीतरागपरमानन्दमधुररसास्वादोऽयमात्मा निरन्तराकुलत्वोत्पादकत्वात् कटुकरसास्वादाः कामक्रोधादय इति भेदज्ञानं तस्यैव भवति स्वरूपे चरणं चारित्रमिति वीतरागचारित्रं तस्यैव भवति। तस्य कस्य। वीतरागनिर्विकल्पपरमसामायिकभावनानुकूलं निर्दोषिपरमात्मसम्यक् श्रद्धानज्ञानानुचरणरूपं यः समभावं करोतीति भावार्थः ॥ ४० ॥

भावार्थ—निश्चयनयसे स्वशुद्धात्मा ही उपादेय है, ऐसी रुचिरूप सम्यग्दर्शन इस समभावीके होता है, तथा स्वशुद्धात्माकी भावनासे उत्पन्न हुआ जो वीतराग परमानंद मधुर रसका आस्वाद उस स्वरूप आत्मा है, तथा [illegible] कामक्रोधादिक भिन्न हैं। ऐसा भेदज्ञान [illegible] वीतरागचारित्र [illegible] ही होता है। [illegible] निर्विकल्प [illegible] (सहायक) [illegible] ॥ ४० ॥

**अथ यदा ज्ञानी जीव उपशाम्यति तदा संयतो भवति कामक्रोधादिकषायसंगतः पुनरसंयतो भवतीति निश्चिनोति–**

आगे ऐसा कहते हैं कि जिससमय ज्ञानी जीव शान्त भावको धारण करता है, उसीसमय संयमी होता है, तथा जब क्रोधादिकषायके वश होता है, तब असंयमी होता है—

**यावत् ज्ञानी उपशाम्यति तावत् संयतो भवति ।**
**भवति कषायानां वशे गतो जीवः असंयतः स एव ॥ ४१ ॥**

**अयमत्र भावार्थः । अनाकुलत्वलक्षणस्थस्वशुद्धात्मभावनोत्थपारमार्थिकसुखस्यानुकूलपरमोपशमे यदा ज्ञानी तिष्ठति तदा संयतो भवति तद्विपरीतं परमात्माकुलत्वोत्पादककामक्रोधादौ परिणतः पुनरसंयतो भवतीति ।**

भावार्थः–आकुलतारहित स्वशुद्धात्माकी भावनासे उत्पन्न हुए निर्विकल्प (असली) सुखका कारण जो परम शान्तभाव उसमें जिससमय ज्ञानी ठहरता है, उसीसमय संयमी कहलाता है । तथा आत्मभावनामें परम आकुलताके उपजानेवाले कामक्रोधादिक अशुद्धभावोंमें परिणमता हुआ जीव असंयमी होता है, इसमें कुछ सन्देह नहीं है ॥ ४१ ॥

**अथ येन कषाया भवन्ति मनसि तं मोहं त्यजेति प्रतिपादयति–**

आगे जिस मोहसे मनमें कषायें होतीं हैं, उस मोहको तू छोड़, ऐसा वर्णन करते हैं—

**तथाहि–निर्मोहनिजशुद्धात्मध्यानेन निर्मोहस्वशुद्धात्मतत्त्वविपरीतं हे जीव मोहं मुञ्च, येन मोहेन मोहनिमित्तवस्तुना वा निष्कषायपरमात्मतत्त्वविनाशकाः क्रोधादिकषाया भवन्ति पश्चान्मोहकषायाभावे सति रागरहितं विशुद्धज्ञानं लभसे त्वमित्यभिप्रायः ।**

भावार्थः–निर्मोह स्वशुद्धात्माके ध्यानसे निर्मोह स्वशुद्धात्मतत्त्वसे विपरीतमोहको हे जीव ! छोड़ । जिस मोहसे अथवा मोह करनेवाले पदार्थसे कषायरहित परमात्मतत्वरूप ज्ञानानन्दस्वभावके विनाशक क्रोधादि कषाय होते हैं, इन्हींसे संसार है, इसलिये मोहकषायके अभाव होनेपरही रागादिरहित निर्मल ज्ञानको तू पा सकेगा ॥ ४२ ॥

अथ हेयोपादेयतत्त्वं ज्ञात्वा परमोपशमे स्थित्वा येषां ज्ञानिनां स्वशुद्धात्मनिरतिस्त एव सुखिन इति कथयति—

आगे हेयोपादेय तत्त्वको जानकर परमशान्तभावमें स्थित होकर जिनके निःकषायभाव हुआ और स्वशुद्धात्मामें जिनकी लीनता हुई, वेही ज्ञानी परम सुखी हैं, ऐसा कथन करते हैं—

तत्त्वातत्त्वं मत्वा मनसि ये स्थिताः समभावे।
ते परं सुखिनः अत्र जगति येषां रतिः आत्मस्वभावे ॥ ४३ ॥

तथाहि—यद्यपि व्यवहारेणानादिबन्धनबद्धस्तिष्ठति तथापि शुद्धनिश्चयेन प्रकृतिस्थित्यनुभागप्रदेशबन्धरहितं, यद्यप्यशुद्धनिश्चयेन प्रकृतशुभाशुभकर्मफलभोक्ता तथापि शुद्धद्रव्यार्थिकनयेन निजशुद्धात्मतत्त्वभावनोत्थवीतरागपरमानन्दैकसुखामृतभोक्ता, यद्यपि व्यवहारेण कर्मक्षयानन्तरं मोक्षभाजनं भवति तथापि शुद्धपरिणामिकपरमभावग्राहकेण शुद्धद्रव्यार्थिकनयेन सदा मुक्तमेव। यद्यपि व्यवहारेणेन्द्रियजनितज्ञानदर्शनसहितं तथापि निश्चयेन सकलविमलकेवलज्ञानदर्शनस्वभावं, यद्यपि व्यवहारेण स्वोपात्तदेहमात्रं तथापि निश्चयेन लोकाकाशप्रमितासंख्येयप्रदेशं, यद्यपि व्यवहारेणोपसंहारविस्तारसहितं तथापि मुक्तावस्थायामुपसंहारविस्ताररहितं चरमशरीरप्रमाणप्रदेशं, यद्यपि पर्यायार्थिकनयेनोत्पादव्ययध्रौव्ययुक्तं तथापि द्रव्यार्थिकनयेन निजटङ्कोत्कीर्णज्ञायकैकस्वभावं निजशुद्धात्मद्रव्यं पूर्वं ज्ञात्वा तद्विलक्षणं परद्रव्यं च निश्चित्य समस्तमिथ्यात्वरागादिविकल्पत्यागेन वीतरागचिदानन्दैकस्वभावे स्वशुद्धात्मतत्त्वे ये रतास्त एव धन्या इति भावार्थः। तथा चोक्तं परमात्मतत्त्वलक्षणं श्री पूज्यपादस्वामिभिः—"अस्त्यात्मानादिबद्धः स्वकृतजफलभुक् तत्क्षयान्मोक्षभागी। ज्ञाता दृष्टा स्वदेहप्रमितिरुपसमाहारविस्तारधर्मा ध्रौव्योत्पत्तिव्ययात्मा स्वगुणयुत इतो नान्यथा साध्यसिद्धिः" ॥ ४३ ॥

[illegible]

चार तरहके वन्धनोंसे रहित है, यद्यपि अशुद्धनिश्चयनयसे अपने उपार्जन किये शुभ अशुभ कर्मोंके फलका भोक्ता है, तो भी शुद्धद्रव्यार्थिकनयसे निज शुद्धात्मतत्त्वकी भावनासे उत्पन्न हुए वीतराग परमानन्द सुखरूप अमृतका ही भोगने वाला है। यद्यपि व्यवहारनयसे कर्मोंके क्षय होनेके वाद मोक्षका पात्र है, तोभी शुद्ध पारिणामिक परमभावग्राहक शुद्ध द्रव्यार्थिकनयसे सदा मुक्तही है। यद्यपि व्यवहारनयकर इन्द्रियजनित मति आदि क्षयोपशमिकज्ञान तथा चक्षु आदि दर्शन सहित है, तो भी निश्चयनयसे सकल विमल केवलज्ञान तथा केवलदर्शन स्वभाववाला है। यद्यपि व्यहारनयकर यह जीव नामकर्मसे प्राप्त देहप्रमाण है, तो भी निश्चयनयसे लोकाकाशप्रमाण असंख्यातप्रदेशी है। यद्यपि व्यहारनयसे प्रदेशोंके संकोच-विस्तार सहित है, तो भी सिद्धावस्थामें संकोच-विस्तारसे चरम शरीरप्रमाण प्रदेशवाला है। यद्यपि पर्यायार्थिकनयसे उत्पाद व्यय ध्रौव्यकर सहित है, तो भी द्रव्यार्थिकनयकर टंकोत्कीर्ण ज्ञानके अखंड स्वभावसे ध्रुवही है। इस तरह पहले निज शुद्धात्मद्रव्यको अच्छी तरह जानकर और आत्मस्वरूपसे विपरीत पुद्‌गलादि पर द्रव्योंको भी अच्छी तरह निश्चयकरके अर्थात् आपपरका निश्चय करके वादमें समस्त मिथ्यात्व रागादि विकल्पोंको छोड़कर वीतराग चिदानन्द स्वभाव शुद्धात्मतत्त्वमें जो लीन हुए हैं, वेही धन्य हैं। ऐसा ही कथन परमात्मतत्त्वके लक्षणमें श्री पूज्यपादस्वामीने कहा है, "नाभाव" इत्यादि। अर्थात् यह आत्मा व्यवहारनयकर अनादिका वन्धा हुआ है, तथा अपने किये हुए कर्मोंके फलका भोक्ता है, उन कर्मोंके क्षयसे मोक्षपदका भोक्ता है, ज्ञाता है, देखनेवाला है, अपनी देहके प्रमाण है, संसारावस्थामें प्रदेशोंके संकोच विस्तारको धारण करता है, उत्पादव्यय ध्रौव्य सहित है, और अपने गुण पर्याय युक्त है। इसप्रकार आत्माके जाननेसे ही साध्यकी सिद्धि है, दूसरी तरह नहीं है ॥ ४३ ॥

**अथ योऽसावेवोपशमभावं करोति तस्य निन्दाद्वारेण स्तुतिं त्रिकलेन कथयति—**

आगे जो संयमी परम शान्त भावका ही कर्ता है, उसकी निन्दा द्वारा स्तुति तीन गाथाओंमें करते हैं—

**द्वौ अपि दोषौ भवतः तस्य यः समभावं करोति।**
**बन्धं एव निहन्ति आत्मीयं अन्यत् जगद् ग्रहिलं करोति ॥ ४४ ॥**

अयमत्र भावार्थः–समशब्देनात्राभेदनयेन रागादिरहित आत्मा भण्यते, तेन कारणेन योऽसौ समं करोति वीतरागचिदानन्दैकस्वभावं निजात्मानं परिणमति तस्य दोषद्वयं भवति। कथमिति चेत्। प्राकृतभाषया बन्धुशब्देन ज्ञानावरणादिबन्धा भण्यन्ते गोत्रं च येन कारणेनोपशमस्वभावेन परमात्मस्वरूपेण परिणतः सन् ज्ञानावरणादिकर्मबन्धं निहन्ति तेन कारणेन स्तवनं भवति, अथवा येन कारणेन बन्धुशब्देन गोत्रमपि भण्यते तेन कारणेन बन्धुघाती लोकव्यवहारभाषया निन्दापि भवतीति। तथा चोक्तम्–लोकव्यवहारे ज्ञानिनां लोकः। पिशाचो भवति लोकस्याज्ञानिजनस्य ज्ञानी पिशाच इति ॥ ४४ ॥

भावार्थः—यह निन्दा द्वारा स्तुति है। प्राकृत भाषामें बन्धु शब्दसे ज्ञानावरणादि कर्मबन्ध लियाजाता है, तथा भाईको भी कहते हैं। यहांपर बन्धु-हत्या निन्द्य है, इससे एक तो बन्धु-हत्याका दोष आया तथा दूसरा दोष यह है, कि जो कोई इनका उपदेश सुनता है, वह वस्त्र आभूषणका त्यागकर नग्न दिगम्बर होजाता है। कपड़े उतारकर नंगा होजाना उसे लोग गहला-पागल कहते हैं। ये दोनों लोक-व्यवहारमें दोष हैं, इन शब्दोंके ऐसे अर्थ ऊपरसे निकाले हैं। परन्तु दूसरे अर्थमें कोई दोष नहीं है, स्तुतिही है। क्योंकि कर्मबन्ध नाश करनेही योग्य है, तथा जो समभावका धारक है,वह आप नग्न दिगम्बर होजाता है, और अन्यको दिगम्बर करदेता है, सो मूढ़ लोग निन्दा करते हैं। यह दोष नहीं है गुणही है। मूढ़ लोगोंके जाननेमें ज्ञानीजन बावले हैं, तथा ज्ञानियोंके जाननेमें जगतके जन बावले हैं। क्योंकि ज्ञानी जगतसे विमुख हैं, तथा जगत् ज्ञानियोंसे विमुख है ॥ ४४ ॥

अथ–आगे समभावके धारक मुनिकी फिरभी निन्दा-स्तुति करते हैं–

अन्य अपि दोषो भवति तस्य यः समभावं करोति।
शत्रुमपि मुक्त्वा आत्मीयं परस्य निलीनो भवति ॥ ४५ ॥

अयमत्र भावार्थः। यो रागादिरहितस्य निज परमात्मनो भावनां करोति स पुरुषः शत्रुशब्दवाच्यं ज्ञानावरणादिकर्मरूपं निश्चयशत्रुं मुञ्चति परशब्दवाच्यं परमात्मानमाश्रयति च तेन कारणेन

**तस्य स्तुतिर्भवति । अथवा यथा लोकव्यवहारेण बन्धनबद्धं निजशत्रुं मुक्त्वा कोऽपि केनापि कारणेन तस्यैव परशब्दवाच्यस्य शत्रोरधीनो भवति तेन कारणेन न निन्दां लभते तथा शब्दच्छलेन तपोधनोऽपीति ॥ ४५ ॥**

भावार्थः—जो तपोधन धन-धान्यादिका राग त्यागकर परमशान्त-भावको आदरता है, राजा-रंकको समान जानता है, उसके दोष कभी नहीं होसकता। सदा स्तुतिके योग्य है, तो भी शव्दकी योजनासे निन्दा द्वारा स्तुति की गई है। वह इस तरहसे है कि शत्रुशव्दसे कहे गये जो ज्ञानावरणादि कर्म-शत्रु उनको छोड़कर परशव्दसे कहेगये परमात्माका आश्रय करता है। इसमें निन्दा क्या हुई, वल्कि स्तुति ही हुई। परंतु लोक व्यवहारमें अपने आधीन शत्रुको छोड़कर किसी कारणसे पर शव्दसे कहेगये शत्रुके आधीन आप होता है, इसलिये लौकिक निन्दा हुई, यह शव्दके छलसे निन्दा-स्तुति कीगई। वह शव्दके श्लेप होनेसे रूपालंकार कहा गया है ॥ ४५ ॥

अथ—आगे समदृष्टिकी फिरभी निन्दा-स्तुति करते हैं—

**अन्यः अपि दोषः भवति तस्य यः समभावं करोति ।**
**विकलो भूत्वा एकाकी उपरि जगतः आरोहति ॥ ४६ ॥**

**अयमत्राभिप्रायः । यः तपस्वी रागादिविकल्परहितस्य परमोपशमरूपस्य निजशुद्धात्मनो भावनां करोति स कलशब्दवाच्यं शरीरं मुक्त्वा लोकस्योपरि तिष्ठति तेन कारणेन स्तुतिं लभते अथवा यथा कोऽपि लोकमध्ये वित्तविकलो भूतः सन् निन्दां लभते तथा शब्दच्छलेन तपोधनोऽपीति ॥ ४६ ॥**

भावार्थः—जो तपस्वी रागादि रहित परम उपशमभाव रूप निजशुद्धात्माकी भावना करता है, उसकी शव्दके छलसे तो निन्दा है, कि विकल अर्थात् बुद्धि वगैरहसे भ्रष्ट होकर लोक अर्थात् लोकोंके ऊपर चढ़ता है। यह लोकनिन्दा हुई। लेकिन असलमें ऐसा अर्थ है, कि विकल अर्थात् शरीरसे रहित होकर तीन लोकके शिखर (मोक्ष) पर विराजमान होजाता है। यह स्तुति ही है। क्योंकि जो अनन्त सिद्ध हुए, तथा होंगे, वे शरीर रहित निराकार होके जगत्के शिखरपर विराजे हैं ॥ ४६ ॥

अथ स्थलसंख्यावाह्यं प्रक्षेपकं कथयति—

आगे स्थल संख्याके सिवाय क्षेपक दोहा कहते हैं—

या निशा सकलानां देहिनां योगी तस्यां जार्गात।
यत्र पुनः जार्गात सकलं जगत् तां निशां मत्वा स्वपिति ॥ ४६ ॥

या वीतरागपरमानन्दैकसहजशुद्धात्मावस्था मिथ्यात्वरागाद्यन्धकारावगुण्ठितासती रात्रिः प्रतिभाति। केषाम्। सकलानां स्वशुद्धात्मसंवित्तिरहितानां देहिनाम्। परमयोगी वीतरागनिर्विकल्पस्वसंवेदनज्ञानरत्नप्रदीपप्रकाशेन मिथ्यात्वरागादिविकल्पजालान्धकारमपसार्य स तस्यां तु शुद्धात्मना जार्गात। यत्र पुनः शुभाशुभमनोवाक्कायपरिणामव्यापारे परमात्मतत्त्वभावनापराङ्मुखः सन् जगज्जार्गात स्वशुद्धात्मपरिज्ञानरहितः सकलो ज्ञानीजनः रात्रिं मत्वा त्रिगुप्तिगुप्तः सन् वीतरागनिर्विकल्पपरमसमाधियोगनिद्रायां स्वपिति इति निद्रां करोतीति। अत्र बहिर्विषये शयनमेवोपशमो भण्यत इति तात्पर्यार्थः ॥ ४६ ॥

भावार्थः—जो जीव वीतराग परमानन्दरूप सहज शुद्धात्माकी अवस्थासे रहितहैं, मिथ्यात्वरागादि अन्धकारसे मण्डित हैं, इसलिये उन सबोंको वहपरमानन्द अवस्था रात्रिके समान मालूम होती है। कैसे ये जगतके जीव हैं, कि आत्मज्ञानसे रहित हैं, अज्ञानी हैं और अपने स्वरूपसे विमुख हैं, जिनके जाग्रत-दशा नहीं है, अचेत सो रहे हैं, ऐसी रात्रिमें वह परमयोगी वीतरागनिर्विकल्प स्वसंवेदन ज्ञानरूपी रत्नदीपके प्रकाशसे मिथ्यात्वरागादि विकल्प-जालरूप अंधकारको दूरकर अपने स्वरूपमें सावधान होनेसे सदा जागता है। तथा शुद्धात्माके ज्ञानसे रहित शुभ अशुभ मन वचन कायके परिणमनरूप व्यापारवाले स्थावर जंगम सकल अज्ञानीजीव परमात्मतत्त्वकी भावनासे पराङ्मुख हुए विषय-कषाय रूप अविद्यामें सदा सावधान हैं, जाग रहे हैं, उस अवस्थामें विभावपरिणतिके स्मरण करनेवाले महामुनि सावधान (जागते) नहीं रहते। इसलिए संसारकी दशासे सोतेहुएसे मालूम पड़ते हैं। जिनको आत्मस्वभावके सिवाय विषय-कषायरूप प्रपंच मालूमभी नहीं है। इस प्रपंचको रात्रिके समान जानकर उसमें याद नहीं रखते, मन, वचन, कायकी तीन गुप्तिसे रक्षित हुए वीतराग निर्विकल्प परमसमाधिरूप योगनिद्रामें मग्न होरहे हैं। सारांश यह है,

कि ध्यानी मुनियोंको आत्मस्वरूपही गम्य है, प्रपंच गम्य नहीं है और जगतके प्रपंची मिथ्यादृष्टी जीव उनको आत्मस्वरूपकी गम्य नहीं है, अनेक प्रपंचोंमें (झगड़ोंमें) लगे हुए हैं। प्रपंचकी सावधानी रखनेको भूलजाना वही परमार्थ है तथा वाह्यविषयोंमें जाग्रत होनाही भूल है ॥ ४६ ॥

**ज्ञानी मुक्त्वा भावं शमं क्वापि याति न रागम् ।**
**येन लभिष्यति ज्ञानमयं तेन एव आत्मस्वभावम् ॥ ४७ ॥**

**तं पूर्वोक्तं समभावं मुक्त्वा क्वापि बहिर्विषये रागं न याति न गच्छति । कस्मादिति चेत् । येन कारणेन लभिष्यति भावि काले प्राप्स्यति । कम् । ज्ञानमयं केवलज्ञाननिर्वृत्तं केवलज्ञानानन्तर्भूतानन्तगुणं । तेनैव समभावेन निर्दोषिपरमात्मस्वभावमिति । इदमत्र तात्पर्यम् । ज्ञानी पुरुषः शुद्धात्मानुभूतिलक्षणं समभावं विहाय बहिर्भावे रागं न गच्छति येन कारणेन समभावेन बिना शुद्धात्मलाभो न भवतीति ॥४७॥**

**अथ ज्ञानी पुरुषः परमवीतरागरूपं समभावं मुक्त्वा बहिर्विषये रागं न गच्छतीति दर्शयति—**

आगे जो ज्ञानीपुरुष हैं, वे परमवीतरागरूप समभावको छोड़कर शरीरादिपरद्रव्यमें राग नहीं करते, ऐसा दिखलाते हैं—

भावार्थः—जो अनन्तसिद्ध हुए वे समभावके प्रसादसे हुए हैं और जो होवेंगे, इसी भावसे होंगे। इसलिये ज्ञानी समभावके सिवाय अन्य भावोंमें राग नहीं करते। इस समभावके विना अन्य उपायसे शुद्धात्माको लाभ नहीं है। एक समभावही भवसागरसे पार होनेका उपाय है। समभाव उसे कहते हैं, जो पंचेन्द्रीके विषयोंकी अभिलाषासे रहित वीतराग परमानन्द सहित निर्विकल्प निजभाव हो ॥ ४७ ॥

**अथ ज्ञानी कमप्यन्यं न भणति न प्रेरयति न स्तौति न निन्दतीति प्रतिपादयति—**

आगे कहते हैं, कि ज्ञानीजन समभावका स्वरूप जानता हुआ न किसीसे पढ़ता है, न किसीको पढ़ाता है, न किसीको प्रेरणा करता है, न किसीकी स्तुति करता है, न किसीकी निन्दा करता है—

भणति भाणयति नैव स्तौति निन्दति ज्ञानी न कमपि ।
सिद्धेः कारणं भावं समं जानन् परं तमेव ॥ ४८ ॥

परं भावं परिणामम् । कथं भूतम् । समं रागद्वेषरहितम् । कारणम् । कस्याः । सिद्धेः परं नियमेन तमेव सिद्धिकारणं परिणाममिति । इदमत्रतात्पर्यम् । परमोपेक्षासंयमभावनारूपं विशुद्धज्ञानदर्शननिजशुद्धात्मतत्त्वसम्यक्श्रद्धानज्ञानानुभूतिलक्षणं साक्षात्सिद्धिकारणं कारणसमयसारं जानन् त्रिगुप्तावस्थायां अनुभवन् सन् भेदज्ञानीपुरुषः परं प्राणिनं न भणति न प्रेरयति न स्तौति न च निन्दतीति--

भावार्थः--परमोपेक्षासंयम अर्थात् तीन गुप्तिमें स्थिर परम समाधि उसमें आरूढ़ जो परमसंयम उसकी भावनारूप निर्मल यथार्थ सम्यग्दर्शन सम्यग्ज्ञान सम्यक्चारित्र वही जिसका लक्षण है, ऐसा मोक्षका कारण जो समयसार उसे जानता हुआ, अनुभवता हुआ, अनुभवी पुरुष न किसी प्राणीको सिखाता है, न किसीसे सीखता है, न स्तुति करता है, न निन्दा करता है । जिसके शत्रु-मित्र सुख-दुःख सब एक समान हैं ॥ ४८ ॥

अथ देवशास्त्रगुरुभक्त्या मुख्यवृत्त्या पुण्यं भवति न च मोक्ष इति प्रतिपादयति--

आगे देव-गुरु शास्त्रकी भक्तिसे मुख्यतासे तो पुण्य-बन्ध होता है, उससे परम्पराय मोक्ष होता है, साक्षात् मोक्ष नहीं, ऐसा कहते हैं--

देवानां शास्त्राणां मुनिवराणां भक्त्या पुण्यं भवति ।
कर्मक्षयः पुनः भवति नैव आर्यः शान्तिः भणति ॥ ६१ ॥

तथाहि--सम्यक्त्वपूर्वकदेवशास्त्रगुरुभक्त्या मुख्यवृत्त्या पुण्यमेव भवति न च मोक्षः । अत्राह प्रभाकरभट्टः । यदि पुण्यं मुख्यवृत्त्या मोक्षकारणं न भवत्युपादेयं च न भवति तर्हि भरतसगररामपाण्डवादयोऽपि निरन्तरं, पञ्चपरमेष्ठिगुणस्मरणदानपूजादिना निर्भरभक्ताः सन्तः किमर्थं पुण्योपार्जनं कुर्युरिति । भगवानाह । यथा कोऽपि रामदेवादिपुरुषविशेषो देशान्तरस्थितसीतादिस्त्रीसमीपागतानां पुरुषाणां तदर्थं संभाषणदानसन्मानादिकं करोति तथा तेऽपि महापुरुषाः वीतरागपरमानन्दैकरूपमोक्षलक्ष्मीसुखसुधारसपिपासिताः

**सन्तः संसारस्थितिविच्छेदकारणं विषयकषायोत्पन्नदुर्ध्यानविनाशहेतुभूतं च परमेष्ठिसम्बन्धिगुणस्मरणदानपूजादिकं कुर्युरिति। अयमत्र भावार्थः। तेषां पञ्चपरमेष्ठिभक्त्यादि परिणतानां कुटुम्बिनां पलालवदनीहितं पुण्यमास्त्रवतीति ॥ ६१ ॥**

भावार्थः–सम्यक्त्वपूर्वक जो देव, गुरु, शास्त्रकी भक्ति करता है, उसके मुख्य तो पुण्यही होता है और परम्परासे मोक्ष होता है। जो सम्यक्त्व रहित मिथ्यादृष्टी हैं, उनके भाव भक्ति तो नहीं है, लौकिक वाहिरी भक्ति होती है, उससे पुण्यका ही वन्ध है, कर्मका क्षय नहीं है। ऐसा कथन सुनकर श्रीयोगीन्द्रदेवसे प्रभाकरभट्टने प्रश्न किया हे प्रभो ! जो पुण्य मुख्यतासे मोक्षका कारण नहीं है, तो त्यागने योग्यही है, ग्रहण योग्य नहीं है। जो ग्रहण योग्य नहीं है, तो भरत, सगर, राम पांडवादिक महान् पुरुषोंने निरन्तर पंचपरमेष्ठीके गुण स्मरण क्यों किये ? और दानपूजादि शुभ क्रियाओंसे पूर्ण होकर क्यों पुण्यका उपार्जन किया ? तव श्रीगुरुने उत्तर दिया–कि जैसे परदेशमें स्थित कोई रामादिक पुरुष अपनी प्यारी सीता आदि स्त्रीके पाससे आये हुए किसी मनुष्यसे वातें करता है–उसका सन्मान करता है और दान करता है, ये सव कारण अपनी प्रियाके हैं, कुछ उसके प्रसादके कारण नहीं हैं। उसी तरह वे भरत, सगर, राम, पांडवादि महान् पुरुष वीतराग परमानन्द रूप मोक्षके लक्ष्मीके सुख अमृत-रसके प्यासे हुए संसारकी स्थितिके छेदनेके लिये विषयकषायकर उत्पन्न हुए आर्त रौद्र खोटे ध्यानोंके नाशका कारण श्रीपंचपरमेष्ठीके गुणोंका स्मरण करते हैं, तथा दान पूजादिक करते हैं, परंतु उनकी दृष्टि केवल निजपरिणतिपर है पर वस्तुपर नहीं है। पंचपरमेष्ठीकी भक्ति आदि शुभ क्रियाको परिणत हुए जो भरत आदिक हैं, उनके विना चाहे पुण्यप्रकृतिका आश्रव होता है। जैसे किसानकी दृष्टि अन्नपर है, तृण भूसादिपर नहीं है। विना चाहा पुण्यका वंध सहजमें ही होजाता है। वह उनको संसारमें नहीं भटका सकता है। वे तो शिवपुरीके ही पात्र हैं ॥ ६१ ॥

**अथ देवशास्त्रमुनीनां योऽसौ निन्दां करोति तस्य पापबन्धो भवतीति कथयति–**

आगे देव, शास्त्र, गुरुकी जो निन्दा करता है, उसके महान् पापका वंध होता है, वह पापी पापके प्रभावसे नरक निगोदादि खोटी गतिमें अनन्तकालतक भटकता है–

देवानां शास्त्राणां मुनिवराणां यो विद्वेषं करोति ।
नियमेन पापं भवति तस्य येन संसारं भ्रमति ॥ ६२ ॥

देवशास्त्रमुनीनां साक्षात्पुण्यबन्धहेतुभूतानां परम्परया मुक्ति कारण भूतानां च योऽसौ विद्वेषं करोति । तस्य नियमेन पापं भवति । येन पापेन संसारं भ्रमतीति । तद्यथा—निजपरमात्मपदार्थो लम्भ-रुचिरूपं निश्चयसम्यक्त्वकारणस्य तत्त्वार्थश्रद्धानरूपव्यवहारसम्य-क्त्वस्य विषयभूतानां देवशास्त्रयतीनां योऽसौ निन्दां करोति स मिथ्या-दृष्टिर्भवति । मिथ्यात्वेन पापं बध्नाति, पापेन चतुर्गतिसंसारं भ्रम-तीति भावार्थः ।

अर्थात् परम्पराय मोक्षके कारण और साक्षात् पुण्यवंधके कारण जो देव शास्त्र गुरू हैं, इनकी जो निन्दा करता है, उसके नियमसे पाप होता है, पापसे दुर्गतिमें भटकता है । भावार्थ—निजपरमात्मद्रव्यकी प्राप्तिकी रुचि वही निश्चय सम्यक्त्व, उसका कारण तत्त्वार्थ श्रद्धानरूप व्यवहारसम्यक्त्व, उसके मूल अरहंत-देव, निर्ग्रन्थगुरु और दयामयी धर्म, इन तीनोंकी जो निन्दा करता है, वह मिथ्यादृष्टी होता है । वह मिथ्यात्वका महान् पाप वांधता है । उस पापसे चतुर्गति संसारमें भ्रमता है ॥ ६२ ॥

अथ वीतरागस्वसंवेदनज्ञानरहितानां तीर्थभ्रमणेन मोक्षो न भवतीति कथयति—

आगे वीतराग स्वसंवेदनज्ञानसे रहित जीवोंको तीर्थ-भ्रमण करनेसे भी मोक्ष नहीं है, ऐसा कहते हैं—

तीर्थं तीर्थं भ्रमतां मूढानां मोक्षो न भवति ।
ज्ञानविवर्जितो येन जीव मुनिवरो भवति न स एव ॥ ८५ ॥

तीर्थं तीर्थं प्रतिभ्रमतां मूढात्मनां मोक्षो न भवति । कस्मा-दिति चेत् । ज्ञानविवर्जितो येन कारणेन हे जीव मुनिवरो न भवति स एवेति । तथाहि-निर्दोषिपरमात्मभावनोत्पन्नवीतरागपरमाह्ला-दस्यन्दिसुन्दरानन्दरूपनिर्मलनीरपूरप्रवाहनिर्भरज्ञानदर्शनादि गुण-समूहचन्दनादिद्रुमवनराजितं देवेन्द्रचक्रवर्तिगणधरादिभव्यजीवतीर्थ-यात्रिकसमूहश्रवणसुखकरदिव्यध्वनिरूप राजहंसप्रभृति विविधपक्षि-

कोलाहलमनोहरं यदर्हद्वीतरागसर्वज्ञस्वरूपं तदेव निश्चयेन गङ्गादि तीर्थं न लोकव्यवहारप्रसिद्धं गङ्गादिकम्। परमनिश्चयेन तु जिनेश्वरपरमतीर्थसदृशं संसारतरणोपायकारणभूतत्वाद्वीतरागनिर्विकल्पपरमसमाधिरतानां निजशुद्धात्मतत्त्वस्मरणमेव तीर्थं, व्यवहारेण तु तीर्थंकरपरमदेवादिगुणस्मरणहेतुभूतं मुख्यवृत्त्या पुण्यबन्धकारणं तन्निर्वाणस्थानादिकं च तीर्थमिति। अयमत्र भावार्थः। पूर्वोक्तं निश्चयतीर्थं श्रद्धानपरिज्ञानानुष्ठानरहितानामज्ञानिनां शेषतीर्थं मुक्तिकारणं न भवतीति ॥ ८५ ॥

भावार्थः—निर्दोष परमात्माकी भावनासे उत्पन्न हुआ जो वीतराग परम आनन्दरूप निर्मलजल उसके धारण करनेवाले और ज्ञानदर्शनादि गुणोंके समूहरूपी चन्दनादिवृक्षोंके वनोंसे शोभित तथा देवेन्द्र चक्रवर्ती गणधरादि भव्य जीवरूपी तीर्थयात्रियोंके कानोंको सुखकारी ऐसी दिव्यध्वनिसे शोभायमान तथा अनेक मुनिजनरूपी राजहंसोंको आदि लेकर नानातरहके पक्षियोंके शब्दोंसे महामनोहर जो अरहंत वीतराग सर्वज्ञ वेही निश्चयसे महातीर्थ हैं, उनके समान अन्यतीर्थ नहीं हैं। वेही संसारके तरनेके कारण परमतीर्थ हैं। जो परमसमाधिमें लीन महामुनि हैं, उनके वेही तीर्थ हैं, निश्चयनयसे निज शुद्धात्मतत्त्वके ध्यानके समान दूसरा कोई तीर्थ नहीं है और व्यवहारनयसे तीर्थंकर परमदेवादिके गुणस्मरणके कारण मुख्यतासे शुभबंधके कारण ऐसे जो कैलास सम्मेदशिखर आदि निर्वाणस्थान हैं, वेभी व्यवहारमात्र तीर्थ कहे हैं। जो तीर्थं तीर्थ प्रति भ्रमण करे, और निज तीर्थका जिसके श्रद्धान परिज्ञान आचरण नहीं हो, वह अज्ञानी है। उसके तीर्थ भ्रमनेसे मोक्ष नहीं होसकता ॥ ८५ ॥

अथ केवलज्ञानादिलक्षणेन शुद्धसंग्रहनयेन सर्वे जीवाः समाना इति कथयति--

आगे केवलज्ञानादि लक्षणसे शुद्धसंग्रहनयकर सब जीव एक हैं ऐसा कहते हैं—

जीवाः सकला अपि ज्ञानमया जन्म-मरणविमुक्ताः।
जीवप्रदेशैः सकलाः समाः सकला अपि स्वगुणैरेके ॥ ९७ ॥

व्यवहारेण लोकालोकप्रकाशकं निश्चयेन स्वशुद्धात्मग्राहकं

यत्केवलज्ञानं तज्ज्ञानं यद्यपि व्यवहारेण केवलज्ञानावरणेन झंपितं तिष्ठति तथापि शुद्धनिश्चयेन तदावरणाभावात् पूर्वोक्तलक्षणकेवलज्ञानेन निर्वृत्तत्वात्सर्वेऽपि जीवा ज्ञानमयाः। व्यवहारनयेन यद्यपि जन्ममरणसहितास्तथापि निश्चयेन वीतरागनिजानन्दैकरूपसुखामृतमयत्वादनाद्यनिधनत्वाच्च शुद्धात्मस्वरूपाद्विलक्षणस्य जन्ममरणनिर्वर्तकस्य कर्मण उदयाभावाज्जन्ममरणविमुक्ताः। यद्यपि संसारावस्थायां व्यवहारेणोपसंहारविस्तारयुक्तत्वाद्देहमात्रा मुक्तावस्थायां तु किञ्चिदूनचरमशरीरप्रमाणास्तथापि निश्चयनयेन लोकाकाशप्रमितासंख्येयप्रदेशत्वहानिवृद्ध्यभावात् स्वकीयस्वकीयजीवप्रदेशैः सर्वे समानाः। यद्यपि व्यवहारेणाव्याबाधानन्तसुखादिगुणाः संसारावस्थायां कर्मझंपितास्तिष्ठन्ति, तथापि निश्चयेन कर्माभावात् सर्वेऽपि स्वगुणैरेकप्रमाणा इति। अत्र यदुक्तं शुद्धात्मनः स्वरूपं तदेवोपादेयमिति तात्पर्यम् ॥ ९७ ॥

भावार्थः—व्यवहारसे लोक अलोकका प्रकाशक और निश्चयनयसे निज-शुद्धात्मद्रव्यको ग्रहण करनेवाला जो केवलज्ञान वह यद्यपि व्यवहारनयसे केवलज्ञानावरणकर्मसे ढका हुआ है, तो भी शुद्धनिश्चयनयसे केवलज्ञानावरणका अभाव होनेसे केवलज्ञानस्वभावसे सभी जीव केवलज्ञानमयी हैं। यद्यपि व्यवहारनयकर सब संसारीजीव जन्म-मरण सहित हैं, तोभी निश्चयनयकर वीतराग निजानन्दरूप अतीन्द्रियसुखमयी हैं। जिनकी आदिभी नहीं और अन्तभी नहीं ऐसे हैं, शुद्धात्मस्वरूपसे विपरीत जन्ममरणके उत्पन्न करनेवाले जो कर्म उनके उदयके अभावसे जन्ममरण रहित हैं। यद्यपि संसारावस्थामें व्यवहारनयकर प्रदेशोंका संकोच विस्तारको धारण करते हुए देहप्रमाण हैं और मुक्त-अवस्थामें चरम (अंतिम) शरीरसे कुछ कम देहप्रमाण हैं, तोभी निश्चयनयकर लोकाकाशप्रमाण असंख्यातप्रदेशी हैं, हानि-वृद्धि न होनेसे अपने प्रदेशोंकर सब समान हैं। यद्यपि व्यवहारनयसे संसार-अवस्थामें इन जीवोंके अव्याबाध अनन्तसुखादिगुण कर्मोंसे ढके हुए हैं, तोभी निश्चयनयकर कर्मके अभावसे सभी जीव गुणोंकर समान हैं। ऐसा जो शुद्ध आत्माका स्वरूप है, वही ध्यान करने योग्य है ॥ ९७ ॥

**अथ सर्वजीवविषये समदर्शित्वं मुक्तिकारणमिति प्रकटयति—**

आगे ऐसा कहते हैं, कि सबही जीव द्रव्यसे तो जुदे-जुदे हैं, परंतु जातिसे एक हैं और गुणोंकर समान हैं, ऐसी धारणा करना मुक्तिका कारण है—

रागद्वेषौ द्वौ परिहृत्य ये समान् जीवान् पश्यन्ति ।
ते समभावे प्रतिष्ठिताः लघु निर्वाणं लभन्ते ॥ १०० ॥

वीतरागनिजानन्दैकस्वरूपस्वशुद्धात्मद्रव्यभावनाविलक्षणौ रागद्वेषौ परिहृत्य ये केचन सर्वसाधारणकेवलज्ञानदर्शनलक्षणेन समानान् सदृशान् जीवान् निर्गच्छन्ति जानन्ति ते पुरुषाः । कथं भूताः । जीवितमरणलाभालाभसुख-दुःखादिसमताभावनारूपे समभावे प्रतिष्ठिताः सन्तः शीघ्रं आत्यन्तिकस्वभावैकाचिन्त्याद्भुतकेवलज्ञानादिगुणास्पदं निर्वाणं लभन्त इति । अत्रेदं व्याख्यानं ज्ञात्वा रागद्वेषौ त्यक्त्वा च शुद्धात्मानुभूतिरूपा समभावना कर्तव्येत्यभिप्रायः ॥ १०० ॥

भावार्थः—वीतराग निजानन्दस्वरूप जो निज आत्मद्रव्य उसकी भावनासे विमुख जो रागद्वेष उनको छोड़कर जो महान् पुरुष केवलज्ञानदर्शनलक्षणकर सवही जीवोंको समान गिनते हैं, वे पुरुष समभावमें स्थित शीघ्रही शिवपुरको पाते हैं। समभावका लक्षण ऐसा है, कि जीवित, मरण, लाभ, अलाभ, सुख, दुःखादि सबको समान जानें। जो अनन्तसिद्ध और होवेंगे, यह सब समभावका प्रभाव है। समभावसे मोक्ष मिलता है। कैसा है वह मोक्षस्थान ? जो अत्यन्त अद्भुत अचिन्त्य केवलज्ञानादि अनन्तगुणोंका स्थान है। यहाँ यह व्याख्यान जानकर रागद्वेषको छोड़के शुद्धात्माके अनुभवरूप जो समभाव उसका सेवन सदा करना चाहिए। यही इस ग्रन्थका अभिप्राय है ॥ १०० ॥

अथ जीववधेन नरकगतिस्तद्रक्षणे स्वर्गो भवतीति निश्चिनोति—

आगे जीवहिंसाका फल नरकगति है और रक्षा करनेसे स्वर्ग होता है, ऐसा निश्चय करते हैं—

जीवं घ्नतां नरकगतिः अभयप्रदानेन स्वर्गः ।
द्वौ पन्थानौ समीपौ दर्शितौ यत्र रोचते तत्र लग ॥ १२७ ॥

निश्चयेन मिथ्यात्वविषयकषायपरिणामरूपं वधं स्वकीयजीवस्य व्यवहारेणेन्द्रियबलायुः प्राणापानविनाशरूपमन्यजीवानां च वधं कुर्वतां नरकगतिर्भवति निश्चयेन वीतरागनिर्विकल्पस्वसंवेदनपरिणामरूपमभयप्रदानं स्वकीयजीवस्य व्यवहारेण प्राणरक्षारूपमभयप्रदानं पर-

जीवानां च कुर्वतां स्वस्याभयप्रदानेन मोक्षो भवत्यन्यजीवानामभयप्रदानेन स्वर्गश्चेति । एवं द्वौ पन्थानौ समीपे दर्शितौ हे जीव यत्र रोचते तत्र लग्नो भव त्वमिति । कश्चिदज्ञानी प्राह । प्राणा जीवादभिन्ना भिन्ना वा, यद्यभिन्नाः तर्हि जीववत्प्राणानां विनाशो नास्ति, अथ भिन्नास्तर्हि प्राणवधेऽपि जीवस्य वधो नास्त्यनेन प्रकारेण जीवहिंसैव नास्ति कथं जीववधे-पापबन्धो भविष्यतीति । परिहारमाह । कथंचिद्भेदाभेदः । तथाहि—स्वकीयप्राणे हते सति दुःखोत्पत्तिदर्शनाद्व्यवहारेणाभेदः सैव दुःखोत्पत्तिस्तु हिंसा भण्यते ततश्च पापबन्धः । यदि पुनरेकान्तेन देहात्मनोर्भेद एव तर्हि परकीयदेहघाते दुःखं न स्यान्न च तथा । निश्चयेन पुनर्जीवे गतेऽपि देहो न गच्छतीति हेतोर्भेद एव । ननु तथापि व्यवहारेण हिंसा जाता पापबंधोऽपि न च निश्चयेन इति । सत्यमुक्तं त्वया, व्यवहारेण पापं तथैव नारकादिदुःखमपि व्यवहारेणेति । तदिष्टं भवतां चेत्तर्हि हिंसां कुरुत यूयमिति ॥ १२७ ॥

अथ निश्चयेन चिन्तारहितध्यानमेव मुक्तिकारणमिति प्रतिपादयति चतुष्कलेन—

आगे निश्चयसे चिन्तारहित ध्यानही मुक्तिका कारण है, ऐसा कहते हैं—

अर्धोन्मीलितलोचनाभ्यां योगः किं आच्छादिताभ्याम् ।
एवमेव लभ्यते परमगतिः निश्चिन्तं स्थितैः ॥ १६६ ॥

अर्धोन्मीलितलोचनपुटाभ्यां योगो ध्यानं किं भवति अपि तु नैव । न केवलमर्धोन्मीलिताभ्याम् । झंपिताभ्यामपि लोचनाभ्यां नैवेति । तर्हि कथं लभ्यते । एवमेव लभ्यते लोचनपुटनिमीलनोन्मीलननिरपेक्षैः । का लभ्यते । केवलज्ञानादि परमगुणयोगात्परमगतिर्मोक्षगतिः । कैः लभ्यते । ख्यातिपूजालाभप्रभृति समस्तचिन्ताजालरहितैः पुरुषैश्चिन्तारहितैः स्वशुद्धात्मरूपस्थितैश्चेत्यभिप्रायः ॥ १६६ ॥

भावार्थः—ख्याति (बड़ाई) पूजा (अपनी प्रतिष्ठा) और लाभ इनको आदि लेकर समस्त चिन्ताओंसे रहित जो निश्चिन्त पुरुष हैं, वेही शुद्धात्मस्वरूपमें स्थिरता पाते हैं, उन्हींके ध्यानकी सिद्धि है और वेही परमगतिके पात्र हैं ॥ १६६ ॥

अथ—आगे फिर भी चिन्ताका ही त्याग बतलाते हैं—

योगिन् मुञ्चसि चिन्तां यदि ततः त्रुटयति संसारः ।
चिन्तासक्तो जिनवरोऽपि लभते न हंसचारम् ॥ १७० ॥

हे योगिन् मुञ्चसि । काम् । चिन्तारहिताद्विशुद्धज्ञानदर्शनस्वभावात्परमात्मपदार्थाद्विलक्षणां चिन्तां यदि चेत् ततश्चिन्ताभावात् । किं भवति । नश्यति । स कः । निःसंसारात् शुद्धात्मद्रव्याद् विलक्षणो द्रव्यक्षेत्रकालादिभेदभिन्नः पञ्चप्रकारः संसारः । यतः कारणात् । छद्मस्थावस्थायां शुभाशुभचिन्तासक्तो जिनवरोऽपि लभते न । कम् । संशयविभ्रमविमोहरहितानन्तज्ञानादिनिर्मलगुणयोगेन हंस इव हंसः परमात्मा तस्य आचारं रागादिरहितं शुद्धात्मपरिणाममिति । अत्रेदं व्याख्यानं ज्ञात्वा दृष्टश्रुतानुभूतभोगाकांक्षप्रभृतिसमस्तचिन्ताजालं त्यक्त्वापि चिन्तारहिते शुद्धात्मतत्त्वे सर्वतात्पर्येण भावना कर्तव्येति तात्पर्यम् ॥ १७० ॥

भावार्थः—हे योगी ! निर्मलज्ञानदर्शनस्वभावपरमात्मपदार्थसे पराङ्मुख जो चिन्ता-जाल उसे छोडेगा तभी चिन्ताके अभावसे संसार-भ्रमण टूटेगा । शुद्धात्मद्रव्यसे विमुख द्रव्य-क्षेत्र-काल-भव-भावरूप पांच प्रकारके संसारसे तू मुक्त होगा । जबतक चिंतावान् है, तबतक निर्विकल्प ध्यानकी सिद्धि नहीं होसकती । दूसरोंकी तो क्या बात है, जो तीर्थंकरदेव भी केवल अवस्थाके पहले जबतक कुछ शुभाशुभ चिन्ताकर सहित हैं, तबतक वेभी रागादिरहित शुद्धोपयोगपरिणामोंको नहीं पासकते । संशय विमोह विभ्रम रहित अनन्त ज्ञानादि निर्मल गुण सहित हंसके समान उज्ज्वल परमात्माके शुद्ध भाव हैं, वे चिन्ताके विनाछोड़े नहीं होते । तीर्थंकरदेवभी मुनि होके निश्चिन्तव्रत धारण करते हैं, ऐसा व्याख्यान जानकर देखे सुने भोगे हुए भोगोंकी वांछा आदि समस्त चिन्ताजालको छोड़कर परम-निश्चिन्त हो, शुद्धात्मकी भावना करना योग्य है ॥ १७० ॥

अथ—आगे श्रीगुरु मुनियोंको उपदेश देते हैं, कि मनको मारकर परब्रह्म का ध्यान करो—

योगिन् दुर्मतिः का तव भावकारणे व्यवहारे ।
ब्रह्म प्रपञ्चैर्यद्रहितं तज्ज्ञात्वा मनो मारय ॥ १७१ ॥

हे योगिन् दुर्मतिः का तवेयं भवरहितात् शुभाशुभमनोवचनकायव्यापाररूपव्यवहारविलक्षणाच्च स्वशुद्धात्मद्रव्यात्प्रतिपक्षभूते पंचप्रकारसंसारकारणे व्यवहारे। तर्हि किं करोमीति चेत्। ब्रह्मशब्दवाच्यं स्वशुद्धात्मानं ज्ञात्वा। कथं भूतं यत्। प्रपञ्चैर्मायापाखण्डैः यद्रहितम्। तं निजशुद्धात्मानं वीतरागस्वसंवेदनज्ञानेन ज्ञात्वा। पश्चात्किं कुरु। अनेकमानसविकल्पजालरहिते परमात्मनि स्थित्वा शुभाशुभविकल्पजालरूपं मनो मारय विनाशयेति भावार्थः ॥ १७१ ॥

भावार्थ--वीतराग स्वसंवेदनज्ञानसे शुद्धात्माको जानकर शुभाशुभ विकल्प-जालरूप मनको मारो। मनके विना वशकिये निर्विकल्प ध्यानकी सिद्धि नहीं होती। मनके अनेक विकल्प-जालोंसे जो शुद्ध आत्मा उसमें निश्चलता तभी होती है, जब कि मनको मारके निर्विकल्प दशाको प्राप्त होवे। इसलिए सकल शुभाशुभ व्यवहारको छोड़के शुद्धात्माको जानो ॥ १७१ ॥

अथ--आगे यही कहते हैं, कि सब विषयोंको छोड़कर आत्मदेवको ध्यावो हे प्रभाकर भट्ट--

सर्वैः रागैः षड्भिः रसैः पञ्चभिः रूपैः गच्छत्।
चित्तं निवार्य ध्याय त्वं आत्मानं देवमनन्तम् ॥ १७२ ॥

चिन्तय त्वं हे प्रभाकरभट्ट। कम्। स्वशुद्धात्मानम्। कथं भूतम्। वीतरागपरमानन्दसुखेन दीव्यति क्रीडति इति देवस्तं देवम्। पुनरपि कथं भूतम्। केवलज्ञानाद्यनन्तगुणाधारत्वादनन्तसुखास्पदत्वादविनश्वरत्वाच्चवानन्तस्तमनन्तम्। किं कृत्वा पूर्वं। चित्तं निवार्य व्यावृत्य। किं कुर्वन् सन्। गच्छत्परिणममानं सत्। कैः करणभूतैः। वीतरागात्स्वशुद्धात्मद्रव्याद्विलक्षणैः सर्वशुभाशुभरागैः। न केवलं रागैः। रसरहिताद्वीतरागसदानन्दैकरसपरिणतादात्मनो विपरीतैःगुडलवणदधिदुग्धतैलघृतषड्रसैः। पुनरपि कैः। अरूपात् शुद्धात्मतत्त्वात्प्रतिपक्षभूतैः कृष्णनीलरक्तश्वेतपीतपञ्चरूपैरिति तात्पर्यम् ॥ १७२ ॥

भावार्थ--वीतरागपरमानन्दसुखमें क्रीड़ा करनेवाले केवलज्ञानादि अनन्तगुणवाले अविनाशी शुद्ध आत्माका एकाग्रचित्त होकर ध्यान कर। क्या करके? वीतराग शुद्धात्म द्रव्यसे विमुख जो समस्त शुभाशुभ राग, निजरससे विपरीत जो

दधि, दुग्ध, तेल, घी, लवण, गुड़, ये छह रस और जो अरूपशुद्धात्मद्रव्यसे भिन्न काले, सफेद, हरे, पीले, लाल, पाँच तरहके रूप—इनमें निरन्तर चित्त जाता है, उसको रोककर आतमदेवकी आराधना कर ॥ १७२ ॥

**तथा योगसारेऽपि कथितम्—**

और योगसागरमें भी आत्मस्वरूपका कथन किया है—

**कालः अनादिः अनादिः जीवः भवसागरः एव अनन्तः ।**
**मिथ्यादर्शनमोहितः नैव सुखं दुःखमेव प्राप्तवान् ॥ ४ ॥**

अर्थ—काल अनादि है, जीव अनादि है और भवसागर अनन्त है। उसमें मिथ्यादर्शनसे मोहित जीवने दुःखही दुःख पाया है, सुख नहीं पाया।

**यदि भीतः चतुर्गतिगमनात् ततः परभावं त्यज ।**
**आत्मानं ध्याय निर्मलं यथा शिवसुखं लभसे ॥ ५ ॥**

अर्थ—हे जीव ! यदि तू चतुर्गतिके भ्रमणसे भयभीत है तो परभावका त्याग कर तथा निर्मल आत्माका ध्यानकर, जिससे तू मोक्ष-सुखको प्राप्त कर सके।

**इच्छारहितः तपः करोषि आत्मन् आत्मानं जानासि ।**
**ततः लघु प्राप्नोषि परमगतिं स्फुटं संसारं न आयासि ॥ १३ ॥**

अर्थ—हे आत्मन् ! यदि तू इच्छारहित होकर तप करे और आत्माको समझे, तो तू शीघ्रही परमगतिको पाजाय तथा तू निश्चयसे फिर संसारमें न आवे।

**आत्मदर्शनं एकं परं अन्यत् न किमपि विजानीहि ।**
**मोक्षस्य कारणं योगिन् निश्चयेन एतत् जानीहि ॥ १६ ॥**

अर्थ—हे योगिन् ! एक परम आत्मदर्शनही मोक्षका कारण है, अन्य कुछ भी मोक्षका कारण नहीं, यह तू निश्चय समझ।

**गृहि व्यापारप्रतिष्ठिताः हेयाहेयं जानन्ति ।**
**अनुदिनं ध्यायन्ति देवं जिनं लघु निर्वाणं लभन्ते ॥ १८ ॥**

अर्थ—जो गृहस्थीके धंधेमें रहते हुएभी हेयाहेयको समझते हैं और जिन भगवान्‌का निरन्तर ध्यान करते हैं, वे शीघ्रही निर्वाणको पाते हैं।

**जिनं स्मरत जिनं चिन्तयत जिनं ध्यायत सुमनसा ।**
**तं ध्यायतां परमपदं लभ्यते एकक्षणेन ॥ १९ ॥**

अर्थ--शुद्ध मनसे जिनका स्मरण करो, जिनका चिन्तवन करो और जिनका ध्यान करो; उनका ध्यान करनेसे एक क्षणभरमें परमपद प्राप्त होजाता है ।

**शुद्धात्मनां च जिनवराणां भेदं मा किमपि विजानीहि ।**
**मोक्षस्य कारणे योगिन् निश्चयेन एतद् विजानीहि ॥ ॥२० ॥**

अर्थ--हे योगिन् ! मोक्षप्राप्त करनेमें शुद्धात्मा और जिन भगवान्में कुछभी भेद न समझो--यह निश्चय मानो ।

**यः जिनः स आत्मा (इति) जानीत एषः सिद्धान्तस्य सारः ।**
**इति ज्ञात्वा योगिनः त्यजत मायाचारम् ॥ २१ ॥**

अर्थ—जो जिन भगवान् हैं वही आत्मा है--यही सिद्धान्तका सार समझो । इसे ससझकर, हे योगीजनो ! मायाचारको छोड़ो ।

**यः परमात्मा स एव अहं यः अहं स परमात्मा ।**
**इति ज्ञात्वा योगिन् अन्यत् मा कुरुत विकल्पम् ॥ २२ ॥**

अर्थ—जो परमात्मा है वही मैं हूं, तथा जो मैं हूं वही परमात्मा है—यह समझकर, हे योगिन् ! अन्य कुछभी विकल्प मत करो ।

**यावत् न भावयसि जीव त्वं निर्मलं आत्मस्वभावम् ।**
**तावत् न लभ्यते शिवगमनं यत्र भाव्यते तत्र यांत ॥ २७ ॥**

अर्थ--हे जीव ! जबतक तू निर्मल आत्मस्वभाकी भावना नहीं करता, तबतक मोक्ष नहीं पासकता । अब जहाँ तेरी इच्छा हो वहाँ जा ।

**यः त्रिलोकस्य ध्येयः जिनः स आत्मा निश्चयेन उक्तः ।**
**निश्चयनयेन एवं भणितः एतत् जानीहि निर्भ्रान्तिम् ॥ २८ ॥**

अर्थ--जो तीनों लोकोंके ध्येय जिन भगवान् हैं, निश्चयसे उन्हेंही आत्मा कहा है--यह कथन निश्चयनयसे है। इसमें भ्रान्ति नहीं करनी चाहिये ।

है, उसे ही जिनेन्द्रदेवने धर्म कहा है। वह धर्म पंचमगति (मोक्ष) को लेजाता है।

**आयुः गलति नैव मनः (मानः ?) गलति नैव आशा खलु गलति।**
**मोहः स्फुरति नैव आत्महितं एवं संसारं भ्रमति॥ ४९॥**

अर्थ–आयु गलजाती है, पर मन नहीं गलता और न आशाही गलती है। मोह स्फुरित होता है, परन्तु आत्महितका स्फुरण नहीं होता–इस तरह जीव संसारमें भ्रमण किया करता है।

**यथा मनः विषयाणां रमते तथा यदि आत्मानं जानाति।**
**योगी भणति भो योगिनः लघु निर्वाणं लभ्यते॥ ५०॥**

अर्थ–जिस तरह मन विषयोंमें रमण करता है, उस तरह यदि वह आत्माको जाननेमें रमण करे, तो हे योगिजनो! योगी कहते हैं कि जीव शीघ्रही निर्वाण पाजाय।

**यथा जर्जरं नरकगृहं तथा बुध्यस्व शरीरम्।**
**आत्मानं भावय निर्मलं लघु प्राप्नोषि भवतीरम्॥ ५१॥**

अर्थ–हे जीव! जैसे नरकवास सैकड़ों छिद्रोंसे जर्जरित है, उसी तरह शरीरकोभी (मलमूत्र आदिसे) जर्जरित समझ। अतएव निर्मल आत्माकी भावनाकर, तो शीघ्रही संसारसे पार होगा।

**धान्धे (?) पतिताः सकलाः जगति नैव आत्मानं खलु जानन्ति।**
**तस्मिन् कारणे एते जीवाः स्फुटं न खलु निर्वाणं लभन्ते॥ ५२॥**

अर्थ–सबलोग संसारमें अपने अपने धंधेमें फँसेहुए हैं और अपनी आत्माको नहीं पहिचानते। निश्चयसे इसी कारण ये जीव निर्वाणको नहीं पाते, यह स्पष्ट है।

**रत्नं दीपः दिनकरः दधि दुग्धं घृतं पाषाणः।**
**सुवर्णं रूप्यं स्फटिकं अग्निः नव दृष्टान्तान् जानीहि॥ ५७॥**

अर्थ–रत्न, दीप, सूर्य, दही, दूध, घी, पाषाण, सोना, चाँदी, स्फटिकमणि, और अग्नि ये (जीवके) नौ दृष्टान्त जानने चाहिये।

देहादिकं यः परं जानाति यथा शून्यं आकाशम् ।
स लघु प्राप्नोति ब्रह्म परं केवलं करोति प्रकाशम् ॥ ५८ ॥

अर्थ–जो शून्य आकाशकी तरह देह आदिको पर समझता है, वह शीघ्रही परब्रह्मको प्राप्त करलेता है और वह केवल प्रकाश करता है ।

नासाग्रेण अभ्यन्तरे (?) ये पश्यन्ति अशरीरम् ।
लज्जाकरे जन्मनि न सम्भवन्ति पिबन्ति न जननीक्षीरम् ॥ ६० ॥

अर्थ–जो नासिकापर दृष्टि रखकर अभ्यन्तरमें अशरीरको (आत्माको) देखते हैं, वे इस लज्जाजनक जन्मको फिरसे धारण नहीं करते और वे माताके दूधका पान नहीं करते ।

आत्मना आत्मानं जानतां किं न इह फलं भवति ।
केवलज्ञानं अपि परिणमति शाश्वतसुखं लभ्यते ॥ ६२ ॥

अर्थ–आत्माको आत्मासे जाननेमें यहां कौनसा फल नहीं मिलता ? और तो क्या इससे केवल-ज्ञानभी होजाता है और जीवको शाश्वत-सुखकी प्राप्ति होती है ।

ये परभावं त्यक्त्वा मुनयः आत्मना आत्मानं जानन्ति ।
केवलज्ञानस्वरूपं लात्वा (लब्ध्वा ?) ते संसारं मुञ्चन्ति ॥ ६३ ॥

अर्थ–जो मुनि परभावका त्यागकर अपनी आत्मासे अपनी आत्माको पहिचानते हैं, वे केवल-ज्ञान प्राप्तकर संसारसे मुक्त होजाते हैं ।

धन्याः ते भगवन्तः बुधाः ये परभावं त्यजन्ति ।
लोकालोकप्रकाशकरं आत्मानं विमलं जानन्ति ॥ ६४ ॥

अर्थ–उन भगवान् पण्डितोंको धन्य है, जो परभावका त्याग करते हैं और जो लोकालोक-प्रकाशक निर्मल आत्माको जानते हैं ।

सागारः अपि अनगारः कः अपि यः आत्मनि वसति ।
स लघु प्राप्नोति सिद्धिसुखं जिनवरः एवं भणति ॥ ६५ ॥

अर्थ–गृहस्थहो या मुनिहो, जो कोईभी निजआत्मामें वासकरता है, वह शीघ्रही सिद्धि-सुखको पाता है, ऐसा जिन भगवान्ने कहा है ।

एषः परिजनः न खलु मदीयः एषः सुख-दुःखयोः हेतुः ।
एवं चिन्तयतां किं क्रियते लघु संसारस्य छेदः ।। ६७ ।।

अर्थ–यह कुटुम्ब परिवार निश्चयसे मेरा नहीं है, यह मात्र-सुख दुःखकाही हेतु है—इसप्रकार विचार करनेसे शीघ्रही संसारका नाश किया जासकता है ।

यथा लोहमयं निगडं बुध तथा सुवर्णमयं जानीहि ।
ये शुभं अशुभं परित्यजन्ति ते अपि भवन्ति खलु ज्ञानिनः ।। ७२ ।।

अर्थ–हे पण्डित ! जैसे लोहेकी साँकलको तू साँकल समझता है उसी तरह तू सोनेकी साँकलकोभी साँकलही समझ । जो शुभ अशुभ दोनों भावोंका परित्याग करदेते हैं, निश्चयसे वे ही ज्ञानी होते हैं ।

यदा मनः निर्ग्रन्थः जीव तदा त्वं निर्ग्रन्थः ।
यदा त्वं निर्ग्रन्थः जीव ततः लभ्यते शिवपन्थाः ।। ७३ ।।

अर्थ–हे जीव ! जव तेरा मन निर्ग्रन्थ होगया तो तूभी निर्ग्रन्थ होगया; और जव तू निर्ग्रन्थ होगया, तो उससे मोक्षमार्ग मिलजाता है ।

यद् वटमध्ये बीजं स्फुटं बीजे वटं अपि खलु जानीहि ।
तं देहे देवं अपि जानीहि यः त्रिलोकप्रधानः ।। ७४ ।।

अर्थ–जैसे वड़के वृक्षमें बीज स्पष्ट दृष्टिगोचर होता है, वैसेही वीजमें भी वड़वृक्ष रहता है । इसी तरह देहमेंभी उस देवको विराजमान समझो, जो तीनों लोकोंमें मुख्य है ।

यः जिनः स अहं स एव अहं एतद्भावय निभ्रान्तम् ।
मोक्षस्य कारणं योगिन् अन्यः न तन्त्रः न मन्त्रः ।। ७५ ।।

अर्थ–जो जिनदेव हैं वह मैं हूं, वही मैं हूं—इसकी भ्रान्ति रहित होकर भावनाकर । हे योगिन् ! मोक्षका कारण कोई अन्य मन्त्र तन्त्र नहीं है ।

आत्मानं दर्शनं ज्ञानं जानीहि आत्मानं चरणं विजानीहि ।
आत्मानं संयमं शीलं तपः आत्मानं प्रत्याख्यानम् ।। ८१ ।।

अर्थ–आत्माकोही दर्शन और ज्ञान समझो; आत्माही चारित्र है और संयम, शील, तप और प्रत्याख्यानभी आत्माकोही मानो ।

**रत्नत्रयसंयुक्तः जीवः उत्तमं तीर्थं पवित्रम् ।**
**मोक्षस्य कारणं योगिन् अन्यः न तन्त्रः न मन्त्रः ॥ ८३ ॥**

अर्थ—हे योगिन् ! रत्नत्रययुक्त जीवही उत्तम पवित्र तीर्थ है और वही मोक्षका कारण है । अन्य कुछ मन्त्र तन्त्र मोक्षका कारण नहीं ।

**यत्र आत्मा तत्र सकल गुणाः केवलिनः एवं भणन्ति ।**
**तेन(?)कारणेन योगिनः स्फुटं आत्मानं विमलं जानन्ति ॥ ८५ ॥**

अर्थ--जहाँ आत्मा है वहाँ समस्तगुण हैं—ऐसा केवलियोंने कहा है । इसलिये योगी लोग निश्चयसे निर्मल आत्माको पहिचानते हैं ।

**एकाकी इन्द्रियरहितः मनोवाक्कायत्रिशुद्ध्या ।**
**आत्मन् आत्मानं जानीहि त्वं लघु प्राप्नोषि शिवसिद्धिम् ॥ ८६ ॥**

अर्थ—हे आत्मन् ! तू एकाकी इन्द्रियरहित और मन-वचन-कायकी शुद्धिसे आत्माको जान ! उससे तू शीघ्रही मोक्ष-सिद्धिको पावेगा ।

**यदि बद्धं मुक्तं मन्यसे ततः बध्यसे निर्भ्रान्तिम् ।**
**सहजस्वरूपे यदि रमसे ततः प्राप्नोषि शिवं शान्तम् ॥ ८७ ॥**

अर्थ—यदि तू बद्धको मुक्त समझेगा तो निश्चयसे तू बँधेगा । तथा यदि तू सहज-स्वरूपमें रमण करेगा तो शान्त-निर्वाणको प्राप्त होगा ।

**सम्यग्दृष्टिजीवस्य दुर्गतिगमनं न भवति ।**
**यदि याति अपि तर्हि(ततः?)दोषः नैव पूर्वं कृतं क्षपयति ॥ ८८ ॥**

अर्थ--सम्यग्दृष्टि जीव कुगतियोंमें नहीं जाता । यदि कदाचित् वह जाताभी है तो इसमें सम्यक्त्वका दोष नहीं । इससे वह पूर्वकृत कर्मका ही क्षय करता है ।

**आत्मस्वरूपे यः रमते त्यक्त्वा सर्वं व्यवहारम् ।**
**स सम्यग्दृष्टिः भवति लघु प्राप्नोति भवपारम् ॥ ८९ ॥**

अर्थ--जो सर्वव्यवहारको छोड़कर आत्मस्वरूपमें रमण करता है, वह सम्यग्दृष्टि जीव है और वह शीघ्रही संसारसे पार होजाता है ।

**यः सम्यक्त्वप्रधानः बुधः स त्रिलोकप्रधानः ;**
**केवलज्ञानमपि लघु लभते शाश्वतसौख्यनिदानम् ॥ ९० ॥**

अर्थ--जिसके सम्यक्त्वका प्राधान्य है वही पण्डित है और वही त्रिलोकमें प्रधान है। वह जीव शाश्वत-सुखके निधान केवल-ज्ञानको भी शीघ्र ही प्राप्तकर लेता है।

**अजरः अमरः गुणगणनिलयः यत्र आत्मा स्थिरः तिष्ठति।**
**स कर्मभिः न बद्धः सञ्चितपूर्वं विलीयते ॥ ९१ ॥**

अर्थ--जहाँ अजर अमर तथा गुणोंकी आधार भूत आत्मा स्थिर होजाती है, वहाँ जीव कर्मोंसे बद्ध नहीं होता और वहाँ पूर्वमें संचित किये हुए कर्मोंकाही नाश होता है।

**यथा सलिलेन न लिप्यते कमलिनीपत्रं कदा अपि।**
**तथा कर्मभिः न लिप्यते यदि रतिः आत्मस्वभावे ॥ ९२ ॥**

अर्थ--जिस तरह कमलिनीका पत्र कभीभी जलसे लिप्त नहीं होता, उसी तरह यदि आत्मस्वभावमें रति हो तो जीव कर्मोंसे लिप्त नहीं होता।

**यः शमसौख्यनिलीनः बुधः पुनः पुनः आत्मानं जानाति।**
**कर्मक्षयं कृत्वा स अपि स्फुटं लघु निर्वाणं लभते ॥ ९३ ॥**

अर्थ--जो शम और सुखमें लीन हुआ पण्डित बार-बार आत्माको जानता है, वह निश्चयही कर्मोंका क्षयकर शीघ्रही निर्वाण पाता है।

**पुरुषाकारप्रमाणः जीव आत्मा एषः पवित्रः।**
**दृश्यते गुणगणनिलयः निर्मलतेजः स्फुरन् ॥ ९४ ॥**

अर्थ--हे जीव! पुरुषाकार यह आत्मा पवित्र है, यह गुणोंकी राशि है और यह निर्मल तेजको स्फुरित करती हुई दिखाई देती है।

**यः आत्मानं शुद्धं अपि जानाति अशुचिशरीरविभिन्नम्।**
**स जानाति शास्त्राणि सकलानि शाश्वतसौख्ये (?) लीनः ॥ ९५ ॥**

अर्थ--जो शुद्ध आत्माको अशुचि शरीरसे भिन्न समझता है, वह शाश्वत सुखमें लीन होकर समस्त शास्त्रोंको जान जाता है।

**वर्जितं सकलविकल्पेन परमसमाधिं लभन्ते।**
**यद् विन्दन्ति सानन्दं किं अपि तत् शिवसौख्यं भणन्ति ॥ ९७ ॥**

अर्थ--जो समस्त विकल्पोंसे रहित होकर परम समाधिको प्राप्त करते हैं, वे आनन्दका अनुभव करते हैं, वह मोक्षसुख कहा जाता है।

**सर्वे जीवाः ज्ञानमयाः (इति) यः समभावः ज्ञायते।**
**तत् सामायिकं जानीहि स्फुटं जिनवरः एवं भणति ॥ ९९ ॥**

अर्थ--समस्तजीव ज्ञानमय हैं, इसप्रकार जो समभाव है, उसे निश्चयसे सामायिक समझो, ऐसा जिन भगवान्ने कहा है।

**हिंसादिकपरिहारं कृत्वा यः आत्मानं खलु स्थापयति।**
**तद् द्वितीयं चारित्रं जानीहि यत् पञ्चमगतिं नयति ॥ १०१ ॥**

हिंसादिकका त्यागकर जो आत्माको स्थिर करता है, उसे दूसरा चारित्र (छेदोपस्थापना) समझो--यह पंचमगतिको लेजाने वाला है।

**एवं हि लक्षणलक्षितः यः परः निष्कलः देवः।**
**देहस्य मध्ये स वसति तयोः न विद्यते भेदः ॥ १०६ ॥**

अर्थ--इन लक्षणोंसे युक्त परम निष्कलदेव जो देहमें निवास करता है, उसमें और आत्मामें कोईभी भेद नहीं है।

**ये सिद्धाः ये सेत्स्यन्ति ये सिध्यन्ति जिनोक्तम्।**
**आत्मदर्शनेन ते अपि स्फुटं एतत् जानीहि निर्भ्रान्तिम् ॥ १०७ ॥**

अर्थ--जो सिद्ध हो चुके हैं, भविष्यमें होंगे और वर्तमानमें होते हैं, वे सब निश्चयसे आत्मदर्शनसेही सिद्ध हुए हैं--यह भ्रान्ति रहित समझो।

॥ तृतीयोऽध्यायः समाप्तः ॥



**❀ श्रीसर्वोदयतीर्थेऽयं पूर्वार्धग्रन्थः समाप्तः ❀**

# शुद्धि-पत्र

| पेज नम्बर | अशुद्ध | शुद्ध |
|---|---|---|
| प्रस्तावना— | | |
| ६ पञ्चवी पंक्ति में | था | तथा |
| २६ | अवएत | अतएव |
| ३१ पंक्ति २५ में | इसाका | इसीका |
| ३१ पंक्ति ८ में | परमागस्वरूपी | परमागमस्वरूपी |
| ४ | याचानार्जित | याचनार्जित |
| २३ एवं २२ श्लोक में | दिव्ययथाऽद्भूतया | दिव्ययाऽद्भुतया |
| ५१ | आत्मकल्शाणकेलिये | आत्मकल्याणकेलिये |
| ७० | प्रोषद्योपवास | प्रोषधोपवास |
| ७७ | गमत | गमन |
| ९३ पंक्ति २३ | लिंजयोरपि | लिंगयोरपि |
| ९४ (८२) गाथाके अर्थ में | उत्सर्गलिगकास्वरूप | उत्सर्गलिंगकास्वरूप |
| ९८ अन्तिम पंक्तिमें | अज्जासंसग्गोए | अज्जासंसग्गीए |
| १०३ अन्तिम पंक्तिमें | सधुओंको | साधुओंको |
| १०४ श्लोक ५५ में | हस्ताच्च्चयुते | हस्ताच्च्युते |
| १२१ | व्यप्ति | व्याप्ति |
| १२३ | वर्नमान | वर्तमान |
| १२६ | प्रपाणकेसमान | प्रमाणकेसमान |
| १३० अन्तिम पंक्तिमें | विव्पक्षका | विपक्षका |
| १३३ पंक्ति १५ में | दाहययुक्त | दाह्ययुक्त |
| १३३ एवं २२ पंक्ति में | विपययें | विपयमें |
| १४२ पंक्ति ३ में | अर्हत्परमण्ठीमें | अर्हत्परमेष्ठीमें |
| १४४ पंक्ति ६ में | रागादयो त्वा | रागादयो वा |
| १५१ | पङिभ प्रमाणै: | पड्भि: प्रमाणै: |
| १५५ | शब्दापशब्दयां | शब्दापशब्दयो: |
| १५६ | मवाप्यते | मवाध्यते |
| १५७ | स्याज्प्रामाण्यम् | तज्ज्ञानस्यात्प्रामाण्यम् |

| पेज नम्बर | अशुद्ध | शुद्ध |
|---|---|---|
| १५७ | तग्राह्य | तद्ग्राह्य |
| १६० | कस्यचिप्रत्यक्षत्वे | कस्यचित्प्रत्यक्षत्वे |
| १६३ | परुस्पर | परस्पर |
| १६४ | त्तस्यादोशोयम् | त्तस्यादोषोयम् |
| १७२ | सामग्रीविज्ञेष | सामग्रीविशेष |
| १७६ | चरित्रसे | तथा चारित्रसे |
| २०४ श्लोक २ के नीचे के अर्थ में | वेभवशाली | वैभवशाली |
| २०५ श्लोक ७ में | कार्थण्यं | कार्पण्यं |
| २१० श्लोक २६ में | मेघावी | मेधावी |
| २१५ श्लोक ५२ में | ओषधसे | औषधसे |
| २२२ श्लोक ८४ में | आत्मार्थ | आत्मार्थं |
| २३३ | ओर | और |
| २४७ श्लोक २०७ में | ओर | और |
| २५४ श्लोक २३७ में | आहवै | आहवे |
| २६६ श्लोक ३१४ में | लघुपूउन्नता | लघुपून्नता |
| २६२ श्लोक १७१ में | प्रपञ्चैर्यद्ररहितं | प्रपञ्चैर्यद्रहितं |